नासन्तः, न हि स्वतोऽविद्यमानाः शशविषाणादयः क्वचिदपि शक्यन्ते कर्तुम्, सिकतासु वा तैलम्, असदुत्पत्तौ तु सर्वत्राऽसत्त्वाऽविशेषान्नियमाभावात्सर्वस्मात्सर्वकार्योत्पत्तिस्स्यादिति, तन्न युक्तियुक्तम्, यतः पूर्वं सदेव कार्यं चेत्, तदा कारणव्यापारेण नैव किमपि कर्त्तव्यमिति तद्वैफल्यमेव, किञ्च सदर्थविषये कारकव्यापार इष्यमाणे कारकव्यापारानुपरमप्रसङ्गः, किं हि तदोपलक्ष्य कारकाणि निवर्त्तेरन्? कार्यसत्तामिति चेत्, न, त्वन्मते तस्याः प्रागपि भावात्, अथ पूर्वं शक्तिरूपेण कार्यं सत् नाभिव्यक्तयापीत्यनभिव्यक्तं तत्तेनाभिव्यक्तीक्रियत इति तत्साफल्यमेवेति चेत्, मैवम्, यतस्साऽभिव्यक्तिः सती चेत्, तदा तत्करणायोगात् कारणव्यापारवैफल्यमेव, असती चेत्, तदा पूर्वमसत्यास्तस्यास्तेन सद्रूपत्वकरणेन असदकरणादित्यादिसाङ्ख्योक्तसिद्धान्तभङ्गप्रसङ्गः, अथ कारणव्यापारेणावरणविनाशः क्रियत इति तत्साफल्यमित्यपि पक्षो न युक्तः, यतोऽन्धकारपिहितघटानुपलम्भे आवारकीभूताऽन्धकारोपलम्भवत् कस्यचित्कार्यावारकस्योपलम्भस्स्यात् न च तदुपलम्भः, येन तद्विनाशकरणेन कारणव्यापारसाफल्यं स्यात्, न च कारणमेव कार्यावारकमित्यपि वक्तुं शक्यम्, तस्य तदुपकारकत्वेन प्रसिद्धेः। ननु यद् यद्दर्शनप्रतिबन्धकं तत्तदावारकं, यथा घटदर्शनप्रतिबन्धकमन्धकारं घटावारकं, कार्यदर्शनप्रतिबन्धकञ्च कारणमिति तत्तदावारकमिति चेत्, तर्हि चक्षुषा घटाऽदर्शनेऽपि तत्स्पार्शनप्रत्यक्षवच्चक्षुषा कार्यादर्शनेऽपि तत्स्पार्शनप्रत्यक्षप्रसङ्गस्स्यात्, अथ कार्यदर्शनप्रतिबन्धकत्वेन कारणं कार्यावारकं न, किन्तु पटादिवद् व्यवधायकत्वेनेति चेत्, तदपि न युक्तम्, व्यवधायकस्य पटस्य भित्त्यादेर्वा ध्वंसे घटादेरुपलम्भवद् व्यवधायकस्य कारणीभूतमृत्पिण्डस्य ध्वंसेऽपि घटकार्योपलब्धिप्रसङ्गः, क्षीरनीरादिवदात्यन्तिकसंश्लेषेण तदावारकत्वे च तत्पृथग्भावं विना तदनुपलब्धिप्रसङ्गः, निराकरिष्यते चाग्रे सत्कार्यवाद इति न किञ्चिदेतत्। एतेन कारणमेव स्वाऽभिन्नकार्यतया परिणमत इत्येव लक्षणानर्थान्तरपरिणामवादोऽपि प्रतिक्षिप्तोऽवसेयः, अभेदे विशेषणविशेष्यभावस्येव परिणामपरिणामिभावस्याप्यऽयोगात्। यदपि कारणेऽसदेव कार्यं सामग्रीत उत्पद्यत इत्यसत्कार्यवादात्मकं नैयायिकवैशेषिकमतं तदपि "असतः सत्तासमवाय उत्पत्तिरित्युत्पत्तिलक्षणस्य समवायघटितत्वेन समवायस्यैकान्तभिन्नावयविनश्च पूर्वं निरासकरणान्निरस्तमवसेयम्। कारणे सर्वथाऽसदेव क्षणिकं कार्यं कुर्वद्रूपात्मकपूर्वकारणादुपजायत इत्यसत्कार्यवादात्मकं बौद्धमतमपि न सङ्गतम्, एकान्तक्षणिकवादस्यैवाऽसिद्धेः। अथ यत्सत्तत्क्षणिकमिति व्याप्तेस्सत्त्वहेतोः क्षणिकत्वसिद्धिः, एवं कृतकत्वहेतोरप्यनित्यत्वसिद्ध्या क्षणिकत्वसिद्धिरिति चेत्, मैवम्, साध्यसाधनभावो भेदनिबन्धन एव, अन्यथा स्वात्मना स्वसिद्धिस्स्यादिति यत्सत्तत्क्षणिकमित्यत्र यत्कृतकं तदनित्यमित्यत्र च भवन्मते पक्षसाध्यहेतूनां वस्तुगत्या स्वलक्षणरूपत्वेनाभेदात् साध्यसाधनधर्मभेदाऽसिद्धौ

सत्त्वहेतोः क्षणिकत्वस्य कृतकत्वहेतोश्चाभिमतत्वस्यासिद्धेः । अथ सत्त्वक्षणिकत्वयोः कृत-
कत्वाऽनित्यत्वयोश्चाऽतद्व्यावृत्तिरूपतया तद्भेदेन भेदस्वीकारान्नैष दोष इति
चेत्, तदप्यसत्, यतस्तद्व्यावृत्तिभेदो न स्वतः, तासां तुच्छरूपत्वेनाभ्युपगमात्स्वतो
भेदस्याऽयोगात्, योगे वा भेदस्य तद्व्यावृत्तिभेदकत्वाद्वस्तुत्वं स्यात्, अन्यथा भेदस्य तद्
व्यावृत्तिभेदकत्वमेव न स्यात्, असद्रूपत्वात्, तथा च वस्तुत्वस्यानेकान्तात्मकत्वव्याप्यत्वेन
व्याप्यस्य तस्य सत्त्वे व्यापकस्यानेकान्तात्मकत्वस्यापि सत्त्वात्सिद्धेरिष्टं नस्समीहितम्,
किञ्च तद्व्यावृत्तीनामिव घटपटादिवस्तूनामेव स्वतो भेदोऽस्तु किमन्तर्गडुतद्व्यावृत्तिभेद
कल्पनया । नन्वेवं तदनुगतप्रतीतिः कथं स्यादिति चेत्, उच्यते—वस्तुनस्सामान्यविशेषोभ
यात्मकत्वाऽनेकान्तात्मकत्वात्सामान्यांशमादायानुगतप्रतीत्युपपत्तिस्स्यादेवेति । अथ व्य
वच्छेद्यभेदात्तद्व्यावृत्तिभेद इत्यपि न युक्तम्, भवन्मते क्षणिकेतरव्यावृत्तेरसत्त्वेतरव्यावृत्तेश्च
एवमनित्येतरव्यावृत्तेः कृतकेतरव्यावृत्तेश्च व्यवच्छेद्यस्य परमार्थभूतस्य कस्यचिदभावा
त्तासां भेदाभावप्रसक्तेः, अथ व्यवच्छेद्यस्य पारमार्थिकस्य कस्यचिदभावेऽपि तस्य कल्पनया
सम्भवत्त्वेनेति काल्पनिकव्यवच्छेद्यभेदात्तद्भेदोऽस्त्विति चेत्, तदपि न सङ्गतम्, व्यवच्छे
द्यस्य नित्यस्य कल्पना नित्येतरव्यावृत्त्या, अन्यथा नित्यानित्ययोरेकत्वापत्तिस्स्यात्, तथा
च नित्येतरव्यावृत्त्यनित्येतरव्यावृत्त्योरन्योन्यव्यवच्छेद्यभेदेन भेदव्यवस्थितौ कथं नान्यो
न्याश्रयः, तथाहि—कल्पितनित्यस्य नित्येतराभिमततया सिद्धौ तद्व्यवच्छेदेनानित्यत्वसिद्धिः,
अनित्यतराभिमततया अनित्यत्वस्य सिद्धौ च तद्व्यवच्छेदेन नित्यत्वसिद्धिरित्यन्योन्याश्रय
स्यादन्योन्याश्रयदोषापत्तितो नान्यतरस्यापि सिद्धिः, व्यावृत्त्योर्भिन्नतया चाऽसिद्धौ न
साध्यसाधनभाव इत्यतो न क्षणिकत्वसिद्धिः । अथ तद्व्यावृत्तीनां व्यवच्छेद्यभेदसम्भेदो
मास्तु, बुद्धिप्रतिभासभेदात्तु स स्यादेव येन च साध्यहेत्वोर्भेद इति भेदनिबन्धनसाध्य
साधनभावात्सत्त्वहेतुना क्षणिकत्वसिद्धिरिति चेत्, तर्हि, शब्द इति बुद्धिप्रतिभासाच्छब्दत्व
बुद्धिप्रतिभासस्य भेदेन शब्दाच्छब्दत्वस्य भेदात्तस्य साधनभावस्स्यात् तथा च शब्दोऽ
नित्यः शब्दत्वादित्याद्यनुमानस्यापि प्रामाणिकत्वापत्त्या न शब्दत्वहेतुः प्रतिज्ञार्थैक
देशाऽसिद्धो हेतुस्स्यात्, अयम्भावः—प्रकृते पक्षेण शब्देन समं शब्दत्वहेतोरैक्यमा
श्रित्य पक्षहेत्वोरैक्यात्प्रतिज्ञार्थैकदेशत्वस्य शब्दत्वहेतोर्यदुक्तं तन्न स्यात्, पूर्वोक्तनीत्या शब्द
शब्दत्वयोर्भेदाभ्युपगमात् । न च शब्द इति बुद्धिप्रतिभासाच्छब्दत्वमिति प्रतिभासस्य
भेदो नेति वाच्यम्, आकारभेदस्य ज्ञानभेदप्रयोजकत्वाऽत्रापि सद्भावात्, अन्यथैकमेव
ज्ञानं स्यात्, आकारभेदेऽपि बुद्धिप्रतिभासभेदानभ्युपगमे विषयभेदासिद्ध्या शब्दशब्दत्व
योर्धर्मधर्मिभाव एव न स्यात् । अथ प्रतिभासभेदेऽपि व्यवच्छेद्यभेदाभावान्न शब्दशब्द
त्वयोर्भेद इति शब्दत्वहेतोः प्रतिज्ञार्थैकदेशत्वम्, नन्वेवं तर्हि भावाभिधायी घटत्व-
शब्दो द्रव्याभिधायी घटशब्द इति तयोः पर्यायत्वं स्यात्, धर्मभूतशब्दत्वाभिधायि

शब्दधर्मिभूतस्वलक्षणात्मकशब्दाभिधायिशब्दयोरेकार्थाभिधायित्वात् घटकलशशब्दवत्, अन्यथा प्रतिज्ञार्थैकदेशताऽपि न स्यात्। तन्न भवदभिप्रायेण सत्त्वक्षणिकत्वयोः कृतकत्वाऽनित्यत्वयोस्साध्यसाधनभावः, भेदाभावात्। अथ अनुपलब्धिहेतुः कार्यहेतुश्च यत्र तत्रैव भेदनियतस्सम्बन्धः, अत्र तु स्वभाव एव हेतुरिति वृक्षशिंशपयोरिव परमार्थतः सत्क्षणिकयोरनित्यकृतकयोरभेदात्तन्नियतस्तादात्म्यसम्बन्ध एव, तथा च सत्त्वक्षणिकत्वयोरनित्यत्वकृतकत्वयोर्भेद एव कल्पनानिर्मितो न त्वभेदः, अतो विकल्पवशाद्धर्मयोर्भिन्नत्वाद्वास्तविकाभेदनियततादात्म्यसम्बन्धाच्च गम्यगमकभाव इति सत्त्व सत्त्वाध्यवसायिना निश्चयेन भेदेन निश्चीयमानं क्षणिकत्वाध्यवसायिनिश्चयेन भिन्नतया निश्चीयमानस्य क्षणिकत्वस्य गमकम्, एवमेव कृतकत्वमनित्यत्वस्य, यतो विकल्पस्यानुभवद्वारोत्पन्नत्वेनाऽनुभवद्वारा स्वलक्षणविषयत्वं, एवमनुभवद्वारा निश्चितविकल्पविषयत्वेन स्वलक्षणस्य निश्चितरूपत्वान्नाश्रयासिद्धत्वम्, सत्त्वक्षणिकत्वयोः कृतकत्वानित्यत्वयोश्च भिन्नविकल्पविषयत्वेन काल्पनिकभेदरूपत्वान्न वा गम्यगमकभावाभावः, अव्यभिचारश्च साध्यसाधनयोर्वास्तविकाभेदनिबन्धनतादात्म्यसम्बन्धादिति चेत्, स्यादेतत्, यदि स्वलक्षणस्य कुतश्चित्प्रमाणात् सिद्धिस्स्यात्, न चैवं निरंशं तत्सिद्धम्, तथाभूतस्य स्वप्नेऽप्यप्रतीयमानत्वात्, यादृग्भूतं कृतकत्वाद्यनेकधर्माध्यासितं प्रत्यक्षे सम्प्रतिभाति तन्न निरंशं, यतस्तदनुभवद्वाराऽऽयातसत्त्वक्षणिकत्वादिविकल्पप्रतिभासिनां धर्माणामव्यभिचारात् साध्यसाधनभाव उपपद्येत, न चानुमानत एव निरंशस्वलक्षणसिद्धिरिति वाच्यम्, व्याप्त्यसिद्धावनुमानस्यैवाप्रवृत्तेः। अथ विनाशः स्वप्रतियोग्युत्पत्तिक्षणाव्यवहितोत्तरक्षणभावी स्वप्रतियोग्युत्तरभाविभावानपेक्षत्वात्, यद् यदुत्पादने स्वोत्तरवर्त्तिभावानपेक्षं तत्स्वाव्यवहितोत्तरक्षण एव तदुत्पादकम्, यथाङ्कुरोत्पादनेऽन्त्या सामग्रीत्यनुमानतः क्षणिकत्वं सेत्स्यतीति चेत्, तदप्यसङ्गतम्, शाल्यङ्कुरोत्पादने समग्रसामग्रीसमवधानदशायामनपेक्षेष्वपि यवबीजादिषु तदुत्पादकत्वाभावेन हेतोरनैकान्तिकत्वात्, अथ यद् यदुत्पादकस्वभावं सद् यदुत्पादने स्वोत्तरभाविभावानपेक्षं तत् स्वाव्यवहितोत्तरक्षणे तदुत्पादकमेवेति नोक्तदोषः, यवबीजादीनां शाल्यङ्कुरोत्पादकस्वभावाभावेन तादृशस्वभावविशिष्टतादृशानपेक्षत्वस्य हेतोस्तत्राभावादिति चेत्, तर्हि यस्मिन् क्षणे विनश्यत्स्वभावो यो भावस्तदव्यवहितोत्तरक्षणे तस्य नाशो भवतु, यश्च कृतकोऽपि भावः प्रथमक्षणे न तथास्वभावस्तस्य न तदव्यवहितोत्तरक्षणे ध्वंस इति न सर्वथा क्षणिकत्वम्, तथा च यत्सत्तत्क्षणिकमिति व्याप्त्यसिद्धेर्न वस्तुमात्रे क्षणिकत्व सिद्ध्यति। अथ कार्यक्रमः स्वातिरिक्तकारणक्रमात्, न तु स्वतः, यत्र न स्वातिरिक्तकारणक्रमो न तत्र कार्यक्रमः, तथा च भावस्य स्वविनाशे न स्वातिरिक्तकारणापेक्षा, अतः कारणक्रमाभावान्न भावस्य ध्वंसोत्पादने विलम्ब इत्यायातं क्षणिकत्वमिति चेत्, मैवम्, विभिन्नशक्तिमत्तया विचित्रप्रकारास्सामग्र्यो दृश्यन्ते, तत्र काचित्सामग्री स्वाव्यवहितोत्तरक्षणे ध्वंसो-

स्यादिति, क्षणिकं तत्पदार्थमात्रं मा भजेत्, यथा विलक्षणाप्यनुद्धिनसृष्टादेव घटो भवति, न सर्वस्मादित्ययापार्थं क्षणिकक्षणिकत्वस्वरूपत्वं वस्तुन इति । प्रथमान्त्ये विनाशितेनार्थ सम्यानां प्रतिक्षणं ध्वंसो यदि न स्यात्तर्हन्तेऽपि क्षणे ध्वंसप्रतीतिर्नोत्पद्यत, द्वितीयक्षणेऽपि भावस्य स्थितिस्वीकारे सर्वदा स्थितिप्रसङ्गात्, तथाहि–किं भावस्य स्वरूपम्, द्विक्षणस्थायित्वमिति चेत्, तर्हि द्वितीयेऽपि क्षणे द्विक्षणस्थायित्वस्वभावस्यानतिक्रम एव, अतिक्रमे वा प्रथमक्षण द्विक्षणस्थायित्वस्वभावस्य द्वितीयक्षण एकक्षणस्थायित्वस्वभावस्य च भेदेन धर्मभेदाद्धर्मिणोरपि भिन्नत्वं स्यात्, तथा चापार्थं क्षणिकत्वमित्यतो द्वितीयेऽपि क्षणे तस्य भावस्स्वीकरणीय एव, स च स्वभावो न तृतीयक्षणमवृत्तित्वमन्तरेण, एवं तृतीयचतुर्थादिपरोत्तरक्षणेऽपि तत्स्वभावानपगम एव, अपगमे वा क्षणिकत्वप्रसङ्गः पूर्वोक्तरीत्या तदवस्थ इत्यासंसारं भावस्य स्थितेरविनाशाद्विनाशप्रतीतिर्दुर्लभा स्यात्, न चैवम्, अतस्तत्प्रतीत्यन्यथाऽनुपपत्त्या प्रतिक्षणं विनाशसिद्धिरिति । किञ्चाद्ये क्षणे योऽभूत्वा भवनलक्षणजन्मस्वभावस्स एव चेद् द्वितीयेऽपि क्षणे तदा तदाऽप्युत्पत्तिरेव, न स्थितिरित्यापादितं क्षणिकत्वम्, द्वितीयेऽपि क्षणे स्थितेरभावात् । अथ प्रथमक्षणे जन्मैव, न स्थितिः, द्वितीयेऽपि क्षणे स्थास्नुस्वभाव एव नोत्पत्स्नुस्वभाव इति विरुद्धधर्माध्यासाभावेन न क्षणिकत्वमिति चेत्, तर्ह्येकस्मिन् विरुद्धधर्माभ्यामप्रसङ्गेन धर्मद्वयाऽयोगेन तद्धर्मिणोर्भिन्नत्वं वाच्यम्, एवञ्च यस्य जन्म न तस्य स्थितिर्यस्य स्थितिर्न तस्यैव जन्म किन्त्वन्यस्यैव, तथा च प्रथमक्षणवृत्तित्वविशिष्टक्षणवृत्तित्वप्रयुक्तस्थितेरभावादापार्थं क्षणिकत्वम् । किञ्च परस्परभिन्नयोः पूर्वकालसम्बन्धित्वापरकालसम्बन्धित्वयोर्विरुद्धस्वभावत्वेन तद्वतस्तद्धर्मिणोरपि भिन्नत्वमिति स्वभावभेदेन क्षणिकत्वस्यैव सिद्धेरिति न विनाशं प्रत्यनपेक्षा भावस्येति चेत्, मैवम्, स्वहेतोरेव भूतभविष्यद्वर्तमानस्वभावत्वेन त्रिकालस्थायितया प्रथमक्षण एवोत्पन्नो भावः, तथाहि–भूतक्षणेष्वभवं स्थितम् वर्तमानक्षणे भविष्यत्क्षणे स्थास्यन् स्थास्यन् इति त्रिस्वभावतया सदुपजातो भावः, न च परापरकालसम्बन्धित्वस्य विरुद्धधर्मत्वम्, तत्स्वभावतयैवोत्पन्नत्वात्, अथ भविष्यत्क्षणे स्थास्यन् इत्यस्य भविष्यत्कालीनस्थितिमान् घट इत्यर्थः, स च न युक्तियुक्तः, यतस्समानकालीनयोरेव विशेषणविशेष्यभावः, न तु भिन्नकालीनयोरपि, तयोस्सम्बन्धायोगात्, तथा च भविष्यत्कालावच्छिन्नस्थितेर्वर्तमानकालेऽभावेन न तद्विशेष्यत्वमिदानीन्तनघटस्य भवेदत्, यथातीतस्यमुरारोपेन तत्स्वीकारात्, तथा चानागतकालस्येदानीमभावेन तदवच्छिन्नस्थितस्याभावेऽपि तद्विशेष्यत्वं वर्तमानघटादिभावस्याविरुद्धमेव, अन्यथा सव्येतरगोविषाणवत् समानकालीनयोरपि सम्बन्धायोगस्समान एवेति विशेषणविशेष्यभावाऽभाव एव, तथाहि–किं समानकालीनयोः कार्यकारणभावस्ताद्रूप्यं वा सम्बन्धः, नाद्यः, पूर्वापरवर्तिनोरेव तत्स्वीकारेण सिद्धान्तव्याकोपप्रसङ्गात्, नापि द्वितीयः, सर्वथाऽभेदे तद्योगात्, अन्यथा घटस्यापि घटाकारस्यसम्बन्धात् घटविशेष्यत्वापत्तेः

घटोघट इति प्रतीत्यापत्तिस्स्यात् । तस्मादुभयात्मकवस्तुन्येव तत्त्वम्, तथा च वर्त्तमान-भविष्यत्कालावच्छिन्नघटादिव्यक्त्यैक्येऽपि पूर्वापरकालात्मकविशेषणभेदेन कथञ्चिद्भेदस्वीकारेण विशेषणविशेष्यभावोपपत्तेः स्थास्यन् वर्त्तमानो घट इति प्रतीत्युपपत्तिस्स्यादेवेति, न चैकस्मिन् स्थिरे पदार्थे पूर्वापरकालसम्बन्धित्वयोर्विरोधदोषाघ्रातत्वान्नोपपत्तिरिति वाच्यम् एव सत्येकस्य परमाणोः परमाणुषट्केन युगपत् संयोगसम्बन्धबलात्परमाणोरपि षट्त्वं स्यात्, तदुक्तम्—"षट्केन युगपद्योगात् परमाणोः षडंशता" इति । तस्मादेकस्य परमाणोः तद्दिगवच्छेदेन तत्परमाणुना तदन्यदिगवच्छेदेन तदन्यपरमाणुना सह युगपत्संयोगसम्बन्धवत्स्थिरस्यापि पदार्थस्य पूर्वोत्तरकालावच्छेदेन पूर्वापरकालसम्बन्धोपपत्तेर्नापरापरकालसम्बन्धप्रयोज्याऽपरापरस्वभावभेदो विरुद्धः, येन विरुद्धधर्माध्यासेन भेदापत्त्या क्षणिकत्वं सिद्धं स्यात् । एतेनैकस्य परमाणोः किं सर्वात्मनाऽपरपरमाणुभिरभिसम्बन्धः, किं वैकदेशेन, आद्ये सम्बन्धिद्वययोरेकपरमाणुरूपत्वापत्त्या परमाणुमात्रं पिण्डस्स्यात् । द्वितीयविकल्पेऽपि ते एकदेशा देशिभूतपरमाणुस्वरूपाः किं वा तद्भिन्नस्वरूपाः, आद्ये भिन्नैकदेशानामेवाभावान्नैकदेशेनाभिसम्बन्धः, द्वितीये च ते एकदेशाः परमाणुभिस्सम्बद्धा असम्बद्धा वा, यद्यऽसम्बद्धास्तदा स्वमतक्षतिः, सम्बद्धाश्चेत्तदा सर्वात्मना, एकदेशेन वा, सर्वात्मनाऽभिसम्बन्धपक्षे एकदेशैकदेशिनोरभेदादेकदेशाऽभावान्नैकदेशेनाभिसम्बन्धः परमाणूनाम् । एकदेशेनैकदेशानामेकदेशिनाऽभिसम्बन्धपक्षेऽपि चैकदेशानां ततो भेदाभेदकल्पनायां तदवस्थः पर्यनुयोगोऽनवस्था च, न च प्रकारान्तर दृष्टम्, येन परमाणूनामभिसम्बन्धस्स्यादित्यतोऽनुपलभ्यमानसम्बन्धकल्पनायां प्रमाणाऽभावेन षट्केन युगपत्सम्बन्धात् परमाणोः षडंशता स्यादित्युक्तमापादनमपि न युक्तियुक्तमिति कुचोद्यावकाशोऽपि निरस्तः, परमाणूनां द्रव्यनयेन निरंशतयैवाभ्युपगमेन कात्स्न्येनैकदेशेन वैकपरमाणोः परमाण्वन्तरेणाभिसम्बन्धाऽभावेऽपि इमौ संयुक्ताविति प्रतीत्यन्यथानुपपत्त्या प्रकारान्तरेणैषां सम्बन्ध इति कल्पनाया एव प्रमाणभूतत्वात् अन्यथा परमाणूनामसम्बद्धानां जलधारणाद्यर्थक्रियाकारित्वमेवानुपपन्नं स्यात् । वंशादीनां चैकदेशाकर्षणे तदपरदेशाकर्षणमुपलभ्यमानं न स्यात् । अथाभावप्रयुक्तव्यवधानस्य योऽभावस्तल्लक्षणनैरन्तर्यमात्रादेव संयुक्तप्रतीत्याद्युपपत्तेः किमर्थान्तरसंयोगकल्पनयेति चेत्, मैवम्, तद्भावमुखेन प्रतीयते न त्वभावमुखेनेति तस्य भावरूपत्वे नामान्तर एव विवादात्, तथा च भावमुखेन प्रतीयमानस्य नैरन्तर्यात्मकस्यापि संयोगस्यानभ्युपगमे कार्योत्पत्तिरहेतुका स्यादिति सोऽभ्युपगन्तव्य एव, तस्मात्पूर्वापरकालसम्बन्धयोगेऽपि स्वभावभेदान्नैकान्ततः क्षणिकत्वम्, किन्तु नीलपीताद्याकारसमूहालम्बनज्ञाने यथा स्वरूपत एकत्वेऽपि नीलाकारत्वपीताद्याकारत्वरूपविभिन्नस्वभावत्वेनानेकत्वमविरुद्धं भवताऽभ्युपगत तथैकस्मिन्नप्यक्षणिकवस्तुनि तत्तत्कालसम्बन्धप्रयुक्तापरापरस्वभावभेदेन कथञ्चिदनेकत्वमविरुद्धमित्येकानेकस्वरूपतया प्रतीयमाने पदार्थे एकान्त-

मेदानुपपत्त्या स्वप्रतियोग्युत्तरभाविभावानपेक्षस्वहेतोरभिन्नः विनाशे स्वप्रतियोग्युत्पत्तिकाला व्यवहितोत्तरक्षणभावित्वमिद्धिर्नेति सिद्धम्। एतेन विनाशो निर्हेतुकः स्वप्रतियोग्युत्तरभावि हेत्वनपेक्षत्वादित्यनुमानेन निर्हेतुकत्वे सिद्धे विनाशः स्वप्रतियोग्युत्पत्त्यनन्तरमेव भवति निर्हेतुकत्वादित्यनुमानेन क्षणिकत्वसिद्धिरित्यपि निरस्तम्, मुद्गरादिना घटो ध्वस्त इति प्रतीतेर्विनाशस्य निर्हेतुकत्वस्यैवाऽसिद्धेः। किञ्चान्वयव्यतिरेकग्रहाधीन एव कार्यकारणभाव ग्रह इतीतरसकलकारणसद्भावे सति मुद्गरादिसत्त्वे घटध्वंसः, तदभावे तदभाव इत्यन्वय व्यतिरेकाभ्यां मुद्गरादेर्हेतुत्वे सिद्धे विनाशस्य निर्हेतुकत्वं निर्युक्तिकमेवेति पूर्वोक्तानुमानेन न क्षणिकत्वसिद्धिरिति। एतेन यो यन्मात्रहेतुको यो यदधीनत्वेन ध्रुवभावी वा स तदुत्पत्त्युत्तर क्षणेऽवश्यमभ्युपगन्तव्य इति सामान्यव्याप्तिमूलक विनाशः स्वप्रतियोग्युत्पत्त्युत्तरक्षणेऽवश्य मभ्युपगन्तव्यः स्वप्रतियोगिमात्रहेतुकत्वात् स्वप्रतियोग्यधीनत्वेन ध्रुवभावित्वाद्वेत्यनुमान मपि निरस्तम् ध्वंसवत्स्थितिरपि स्वाश्रयोत्तरक्षणेऽवश्यमभ्युपगन्तव्या स्वाश्रयमात्रहेतुक त्वात् स्वाश्रयाधीनत्वेन ध्रुवभावित्वाद्वेत्यापत्तिप्रसङ्गात्। अन्यतो यदेव हेमद्रव्यं कुण्डलरूपे णोत्पद्यते तदेवाङ्गदादिरूपेण विनश्यतीत्यादिप्रत्ययानुरोधेनोत्पादव्ययोरेकाधिकरणतापि स्थायापि द्रव्यरूपस्थितिस्तन्वयस्याभ्युपगन्तव्यत्वादवसेयेति। अथाऽक्षणिके क्रमेण तत्तत्कार्य कारित्वस्वभावत्वे तत्तत्कार्यभेदेन तत्तत्कार्यतानिरूपितकारणत्वस्वभावानां भिन्नत्वात्तत्स्वभाव तद्वतोरभेदात् यावन्तस्तत्स्वभावास्तावद्भेदप्रसङ्गेनैकत्वमेव तस्य व्याहतं स्यात्, युगपदेव कार्य कारित्वस्वभावत्वे यावत्तत्कार्याणामभ्युत्पत्तिप्रसङ्गः, अविकलकारणत्वात्, तथा चैकक्षण एव सकलकार्योत्पत्तेर्द्वितीयक्षणेऽकिञ्चित्करत्वेन गगनारविन्दतुल्योऽक्षणिकभावस्स्यात्। न चैकोऽपि भावः सकलकालकलाभाविनीर्युगपत्सर्वाः क्रियाः करोतीति प्रतीतिकमपि। किञ्च क्रमेणार्थक्रियां साधयन् स्थिरो भावो विवक्षिततत्तत्क्षणावच्छिन्नकार्यं प्रतीव तदुत्तरक्षणा वच्छिन्नकार्यं प्रति समर्थस्वभावः किंवाऽसमर्थस्वभावः, तत्र आद्यपक्षो युक्तः, समर्थस्य भावस्य क्षेपाऽयोग इति विलम्बेन कार्यकरणे हेत्वभावेन क्षणान्तरभाविनीः क्रियाः प्रथम क्रियाकाल एव प्रसह्य कुर्यात्, समर्थस्य कालक्षेपाऽयोगात्, कालक्षेपाभ्युपगमे चाऽसामर्थ्य प्राप्तेः, नापि द्वितीयपक्षस्सङ्गतः, असमर्थस्वभावत्वात्तदुत्तरकालावच्छिन्नं तेन कार्यं नोत्पद्येत ततोऽर्थक्रियाकारित्वाभावाद्भावाभावसद्रूपं स्यात्। यद्योत्तरकालावच्छिन्नकार्यं प्रति पूर्वक्ष णावच्छेदेनैवाऽसमर्थं न तूत्तरकालावच्छेदेनापीति चेत्तर्हि तत्पूर्वकालावच्छिन्नसामर्थ्या सामर्थ्यलक्षणविरुद्धधर्माध्यस्तत्वेनैकस्या अपि व्यक्तेर्भेदप्रसक्त्या स्थैर्यं न स्यात्। समर्थ स्यापि सहकार्यपेक्षया विलम्ब इति चेत्, तर्हि तस्य सामर्थ्यमपरसहकारिसापेक्षत्वविरुद्धं सञ्जातमिति भावस्स्वतोऽसमर्थस्वभावस्स्यात्, "नापेक्ष्यमसमर्थम्" (पात महा० १ १–८) इति वचनात्, तस्य स्वतस्सामर्थ्ये वा सहकारिसन्निधावजायमानानि कार्याणि स नैवोपेक्षेत, अपि तु झटित्येव तानि घटयेत्, अन्यथा तत्सामर्थ्यस्यैकार्येऽनागतत्वनवधिकत्वस्यात्।

किञ्च ते सहकारिणः किञ्चित्करा अकिञ्चित्करा वेति विकल्पद्वयम्, अकिञ्चित्करत्वे सहकार्यपेक्षानुपपत्तेः, किञ्चित्करत्वादेव तदपेक्षेति चेत् तत्र पृच्छामः किं कारणस्य स्वरूपलाभार्थं सहकार्यपेक्षा, उतोपकारार्थम्, किं वा कार्यार्थमिति, न प्रथमः, स्वरूपस्य कारणाधीनस्य नित्यस्य वा पूर्वसिद्धत्वात्, न द्वितीयः, स्वयं समर्थेऽसमर्थे वोपकारस्यानर्थकत्वात्। नापि तृतीयः, कारणस्य कार्यानुकूलसामर्थ्ये सहकारिणमन्तरेणापि तत एव कार्योत्पत्तेः, कार्यानुकूलाऽसामर्थ्ये च सहकारिणस्सत्त्वेऽप्युक्तस्वभावस्य तदवस्थत्वादेव कार्यानुत्पत्तेस्सहकारिणोऽकिञ्चित्करत्वेन नापेक्ष्यत्वं सम्भवतीति कार्यार्थमपि तदपेक्षाऽयोगादिति, अनेकाधीनस्वभावतया कार्यमेवापेक्षत इति चेत्, न, कार्यस्य पूर्वमसिद्धत्वेनान्यस्याऽपेक्षाऽयोगात्। स्वतन्त्रकारणानुविधायित्वे च कार्यस्य स्वतन्त्रकारणवदेवान्यापेक्षताऽयोगात्, अथवा केयमपेक्षा नाम, किं तैस्सह करोतीत्यन्वयपर्यवसितः स्वभावभेदः, उत तैर्विना न करोतीति व्यतिरेकपर्यवसायिस्वरूपविशेषः, आहोस्वित्तैरुपकृतः करोतीत्युपकारभेदः, आद्यपक्षे तैः सह करोतीत्यत्र सहकारिसाहित्यार्थकं तैस्सहेत्यन्तमुपलक्षणम्, किं वा विशेषणमिति विकल्पद्वयम्, यद्युपलक्षणं, तर्हि तस्य विशिष्टशरीराप्रविष्टत्वात्करोतीत्येतावन्मात्रस्य स्वभावत्वप्रसक्त्या सहकार्यऽसमवधानकालेऽप्युक्तस्वभावस्य सद्भावेन कार्योत्पत्तिप्रसङ्गस्स्यात्। यदि विशेषणं, तर्हि कर्तृत्ववत् सहकारिसाहित्यस्यापि स्वभावानुप्रविष्टत्वात् सहकारिणो न कदापि जह्यात्, प्रत्युत पलायमानानपि तान् गले पाशेनाकृष्यानयेत्, अन्यथा स्वभावहानिप्रसङ्गात्, अत एव न द्वितीयोऽपि पक्षो युक्तः, पूर्ववत्सर्वदाऽकर्तृत्वप्रसङ्गात्। सहकारिविरहादेवाऽकर्तृत्वस्वभावश्चेत् तर्हि कालान्तरेऽपि स्वहेतुवशादुपसर्पतोऽपि सहकारिणः पराणुद्य न कुर्यादेव, तद्विरहप्रयुक्ताऽकर्तृत्वस्वभावत्वात्। अयम्भावः—तैर्विनेत्यस्य विशेषणत्वात्तस्योक्तस्वभावप्रविष्टत्वेन कदापि तत्परित्यागाऽभावेन सहकारिकालेऽप्युक्तस्वभावस्य सत्त्वेन तदानीमपि कार्यं न कुर्यादेवेति। अथ सहकारिषु सत्सु कर्तृस्वभावः, तद्विरहेऽकर्तृस्वभाव इति स्वभावद्वयमेवेति चेत्, तर्हि विरुद्धधर्माध्यासेनैकस्या अपि व्यक्तेर्नानात्वप्रसङ्गेन स्थिरत्वहानेः क्षणिकत्वसिद्ध्याऽस्माकमेव सिद्धिस्स्यात्, न चोक्तस्वभावद्वयस्य पूर्वोत्तरकालावच्छेदेनाभ्युपगमान्न विरुद्धधर्माध्यास इति वाच्यम् स्वभावतद्वतोरभेदात्स्वभावयोर्भेदे तदभिन्नधर्मिणोरपि भेदस्यावश्यम्भावात्, एकस्य धर्मिणस्स्वाभिन्नस्वभावद्वयायोगात्, योगे वा तद्वद् धर्मिणोऽपि द्वैतप्रसङ्गस्स्यात्, धर्मिण इव स्वभावद्वयस्यापि वैक्यप्रसङ्गस्स्यात् तदभिन्नाभिन्नस्य तदभिन्नत्वनियमादिति। स्वभावतद्वतोर्भेदे हिमाद्रिविन्ध्याचलयोरिव सम्बन्धाऽयोगेन स्वभावयोर्धर्मिणि सत्त्वाऽयोगेन निस्स्वभावत्वेनासतो धर्मिणः किञ्चित्कार्यकारित्वं न स्यादिति। तृतीयपक्षस्तु बहुदुःखानवस्थादुरस्थः, तथाहि–सर्वदोपकारप्रसङ्गपरिहाय सहकारी कारणे उपकारं सहकार्यन्तरमपेक्ष्यैव करोतीत्यभ्युपगन्तव्यम्। सहकार्यन्तरमपि सहकारिण्युपकारं कुर्वत् सहकार्यन्तरमपेक्ष्यैव तं करोति, तदपि सहकार्यन्तरं सहकार्यन्तरे मुहुर्मु-

न्तरमपेक्ष्यैव तं विदधते, एवमग्रेऽपीत्यनवस्थाऽऽपत्ता। सहकारिकृतोपकारेण सर्वेण सर्वदा कार्योत्पादनसमर्थमीस्योपकारान्तरमपेक्षणीयं स्यात्, तेनाप्यन्योपकारोऽपेक्षणीयस्स्यात्, तेनाप्यन्य इत्येवं द्वितीयाऽनवस्था। तथा सहकारिणा कर्तव्यस्योपकारस्य धर्म्यभेदे सहकारिणा धर्म्येवोत्पादितस्स्यात्, न चेदं युक्तम्, कारणीभूतस्य धर्मिणस्स्वकारणादेव प्रागेवोत्पन्नत्वात्, धर्मिभेदे तु तस्य किमायातम्, भेदे सम्बन्धाऽयोगेन धर्मिणोऽनुपकृतत्वेन तदवस्थत्वात्। अथ भिन्नेनाप्युपकारेण धर्मिणि किञ्चिदुपकारान्तरमाधेयम्, तर्हि तेनापि तथान्यदाधेयं स्यादिति तृतीयाऽनवस्थाऽऽश्रयतश्चावलम्बिनी स्यादिति परेषामक्षणिके क्रमयौगपद्याभ्यामर्थक्रियाविरोधाच्चतः क्रमाक्रमाभ्यां व्याप्ताऽर्थक्रिया व्यापकानुपलब्धिवशात् व्यापकनिवृत्तौ निवर्तमाना व्याप्यमर्थक्रियाकारित्वं निवर्तयति, तदप्यर्थक्रियाकारित्वं व्यापकं निवर्तमाने स्वव्याप्यं सत्त्वं निवर्तयतीत्यक्षणिकस्यासत्त्वे सिद्धे प्रकारान्तराभावात् क्षणिक एव सर्वं विभाव्यतीति सत्त्वक्षणिकत्वयोर्व्याप्तिसिद्ध्या क्षणिकत्वं सेत्स्यतीति चेत् उच्यते, ममापि क्षणिकेऽपि क्रमयौगपद्याभ्यामर्थक्रियाविरोधस्याक्षणिकत्वादिनापि वक्तुं शक्यत एव, तथाहि—न हि कारणभेदमन्तरेण कार्यस्य भेद उपलभ्यते, अन्यथैकस्मादेव कारणादनेककार्योत्पत्तिर्भविष्यतीति भिन्नकार्योत्पत्तये भिन्नकारणोपादानानां प्रवृत्तिर्निष्फला स्यात्, तथा चैकस्मादेव प्रदीपात् युगपदेव स्वोपादेय—स्वविषयकज्ञान—घटादिविषयकज्ञान—तमोध्वंस—वर्तिविकारादयो भवन्ति तत एकक्षणस्यैकस्य प्रदीपस्य कार्यभेदप्रयोजकस्वभावभेदेन भवन्मतेऽनेकत्वं स्यात्, एवं पूर्वरूपस्योपादानभावेनोत्तररूपं प्रति, सहकारिभावेन चोत्तररसादिकं प्रति कारणस्यैकस्यापि पूर्वरूपस्यानेकत्वं स्यात् स्वभावभेदमन्तरेण कार्यभेदाऽयोगात्, एकस्वभावत्वेऽन्यस्य च तेषां कार्याणामेकत्वापत्तेः, स्वभावभेदे चैकत्वस्य व्याहतेर्नैकस्य युगपदनेककार्यकारित्वमभीष्टं सिद्धं स्यादिति। अथ स्वभावभेदादेव कार्यभेदो नेष्यते किन्तूपादानभेदादेवेति चेत्, भवत्वेवं, तथापि स्वभावभेदोऽभ्युपगत एव, उपादानभावेन सहकारिभावेन चैकस्य प्रदीपादे रूपादिक्षणस्य वा युगपदनेककार्योत्पत्त्युपयोगाभ्युपगमात्। उपादानसहकारिस्वभावयोश्च परस्परं भेदात्, तथा च स्वभावभेदादेकस्यापि प्रदीपादिक्षणस्यानेकत्वमनिवार्यं स्यादिति। अथैकस्मिन् कार्ये य एवोपादानभावस्स एव कार्यान्तरोत्पत्तौ सहकारिभाव इति तयोरभेदान्न स्वभावभेद इष्यत इति चेत्, तर्हि किं सहकारिरूपं कारणमभ्युपगम्यते किं वोपादानरूपम्, न तावदाद्यपक्षो युक्तः उपादानस्याभावात् कुतस्तस्मात्कार्यभवः। न द्वितीयोऽपि पक्षः समीचीनः, यतः प्रदीपः स्वोपादेयकार्यं प्रति यथोपादानकारणं तथैव सहकार्यकार्यमपि जनयति, यथा पूर्वरूपमुत्तररूपं प्रत्युपादानकारणं तथैव रसादिकं प्रत्यपीत्युपादानभूतस्यैकत्वेनोपादानभेदात्कार्यभेद इति पक्षस्तेऽभिमतानि कार्याणि न स्युः। एवमपि यदि क्षणिककारणमप्येकं क्वचन प्रत्युपादानभाव एवान्यत्कार्यं प्रति सहकारिभाव इति न प्रतिक्षणस्वभावभेदः तर्ह्यक्षणिकस्यापि कारणस्य पूर्वापरका-

वच्छिन्नकार्यकारित्वमेवोत्तरकालावच्छिन्नकार्यकारित्वम्, न त्वन्यदिति क्रमेणानेककार्यकारिणोऽपि न स्याच्छक्तिलक्षणस्वभावभेदः कार्यसाङ्कर्यञ्च। न च पूर्वक्षणावच्छिन्नकार्यानुकूलसामर्थ्यमेव यद्युत्तरक्षणावच्छिन्नकार्यानुकूलसामर्थ्यं तर्हि तयोरभेदात्पूर्वक्षणावच्छेदेनैवोत्तरकार्यानुकूलसामर्थ्यसद्भावात् पूर्वक्षण एवोत्तरकार्योत्पत्तिप्रसङ्गस्स्यादिति वक्तव्यम्, क्षणिकेऽप्यस्य समानत्वात्, तथाहि—कारणस्य प्रथमक्षणावच्छिन्नसत्ताकाले द्वितीयतृतीयादिक्षणावच्छिन्नकार्यानुकूलसामर्थ्यस्याभावे उत्तरकालेऽपि तत्तत्कार्याणि न स्युरिति प्रथमक्षणेऽपि तादृशसामर्थ्यसद्भावेन युगपदेव तत्तत्कार्योत्पत्तिप्रसङ्गस्स्यात्, समर्थस्य क्षेपायोगादिति कार्यकारणयोरेककालीनत्वप्रसक्त्या कार्यकारणभाव एव विनश्येत। नन्वाद्यक्षणे सहकारिविरहान्नोत्तरक्षणावच्छिन्नकार्योत्पत्तिप्रसङ्ग इति चेत्, तर्ह्यक्षणिकपक्षेऽपि तुल्यमेतत्। अथोक्तसामर्थ्यस्योत्तरक्षणघटितत्वेन तच्छालिना कारणेन पूर्ववर्तिनोत्तरक्षणावच्छेदेनैव तत्तत्कार्योत्पत्तिः, न तु प्रथमक्षणावच्छेदेनेति यदि ब्रूयात्तदाऽक्षणिकवादेऽपि समानमेवैतत्। तन्न क्षणिकपक्षे युगपत्कार्यकारित्वं युज्यते, नापि क्रमिककार्यकारित्वं क्षणिकवस्तुनि प्रमाणपद्धतिमवलम्बते, सर्वकालमभिन्नस्वरूप एव वस्तुनि तस्य घटमानत्वात्, देशकृतस्य कालकृतस्य च क्रमस्य तत्र सम्भवात्। प्रतिक्षणविनाशिनि च भावे नानादेशव्याप्तिलक्षणस्य देशक्रमस्य नानाकालव्याप्तिलक्षणस्य कालक्रमस्य चासम्भवात्। यदाहुः—

"यो यत्रैव स तत्रैव, यो यदैव तदैव सः।
न देशकालयोर्व्याप्ति,-र्भावानामिह विद्यते॥ १॥" इति।

अन्यथा तत्तत्पूर्वापरक्षणोत्पद्यमानघटपटमठादीनामपि क्रमवत्क्षणापेक्षया तत्तत्कार्यकारित्वेन क्रमिककार्यकारित्वप्रसङ्गरूपातिप्रसङ्गस्स्यात्, अथ यद्यपि स्वतः प्रतिक्षणमुत्पद्यमानः क्षणिकपदार्थो भिन्नभिन्न एव तथापि पूर्वापरक्षणवर्त्तिनां तेषां सौसादृश्यादेकत्वाध्यवसायात्काल्पनिकैकत्वेन क्रमकारित्वम्, क्रमोत्पद्यमानघटपटादीनां तु तदभावान्न तथात्वमित्यपि न च वक्तव्यम्, सर्वतो व्यावृत्तवस्तुत्वादिना भिन्नेष्वभेदावगाहिभ्रान्तिनिमित्तस्य वस्तुभूतसाधर्म्यस्याभावात्, न चैकपरामर्शप्रत्ययहेतुत्वेन साधर्म्यमभ्युपगन्तव्यम्, चक्षूरूपालोकमनस्कारेष्वपि तस्य प्रसक्तेः, काल्पनिकसादृश्यस्य तादृशभ्रान्तिनिमित्तत्वे च कल्पनाया निरङ्कुशत्वेन सर्वत्र तत्प्रसङ्गात्। वास्तविकसादृश्यस्य चाभ्युपगमे तस्य यदि क्षणिकत्वमुररीकरोषि न तर्हि क्षणेभ्यः कश्चिद्विशेषः। अथाऽक्षणिकत्वमिति चेत्, तर्हि पर्यवसितं क्षणिकवादेन, अक्षणिकस्य सादृश्यस्य सद्भावात्, अभिहितञ्च न्यायमञ्जर्याम्—

"अथापि नित्यं परमार्थसन्तं, सन्ताननामानमुपैषि भावम्।
उत्तिष्ठ भिक्षो फलितास्तवाशाः, सोऽयं समाप्तः क्षणभङ्गवादः॥ १॥" इति

तदेवं क्षणिके क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्ततोऽर्थक्रियानिवृत्तौ तद्व्याप्य सत्त्व व्यापकानुपलब्धिबलेनैव निवर्तमानं गत्यन्तराऽभावादक्षणिक एवावस्थानं लभत इति साध्यविपर्ययसाधनात्सत्त्वहेतुर्विरुद्ध इति न तेन क्षणिकत्वं सिध्यति । यच्च समर्थस्वभावस्य क्षेपाऽयोग इति विकल्पेन कार्यकरणे हेतुभावेन कालान्तरभाविनीः क्रियाः प्रथमक्रियाकाल एव प्रसह्य कुर्यादिति पूर्वोक्तं, तत्र सहकारिसान्निध्ये सति क्षेपाऽयोग इति वदामः, तथा च सहकार्यसन्निधेर्विलम्बो युक्त एव, तथाहि—सहकारिषु सत्सु करोति तैर्विना न करोतीत्येवमस्य स्वभावो दर्शनबलादेवावगम्यते, एवंविधस्वभावस्य विरोधाभावादुभयवादिसिद्धत्वाच्च यतः क्षणिकोऽपि हि कुर्वद्रूपो भावः सहकारिभिः सहैव करोतीति स्वभावो भवद्भिरभ्युपगन्तव्य एव । इतरथा सहकारिणामसहकारित्वप्रसङ्गः स्यात् । ननु नैते सहकारिणः, किन्तु सहितकारिण इति चेत्, तर्ह्येकैकस्य सामर्थ्ये पृथगेव कार्यजननापत्तिः, असामर्थ्ये सहितकारित्वमपि न भवेत्, न हि वन्ध्या इतरसहकृतोऽपि पुत्रोत्पादको दृष्ट इति । अतस्सहकारिभिस्सहैव करोतीति नियमे सति तैर्विना न करोतीति विपर्ययनियमोऽप्यागत एव, अतः सहकार्यसन्निधेर्विलम्बो युक्त एव । कारकस्य स्वरूपलाभार्थं सहकार्यपेक्षा उतोपकारार्थं किं वा कार्यार्थमिति विकल्प्य यदुक्तं, तदप्यसङ्गतमेव, यतः कारकस्य फलोपधानात्मककारणतावच्छालिस्वरूपमेव सहकार्यपेक्षम्, सहकार्यपेक्षमेव च स्वरूपं सामर्थ्यशब्देनाप्युच्यते, तथा च सहकारिसाधीन-सत्ताकतया सामर्थ्यं सहकार्यपेक्षयैव स्वस्वरूपतां बिभर्तीति तदपेक्षाऽऽवश्यकीति सहकारिभिरितस्यैव समर्थत्वान्न पूर्वोक्तदोष इति । यच्च तैस्सह करोतीत्यत्र सहकारिसाहित्यार्थ-कस्य तैस्सहेत्यस्य विशेषणत्वे कर्तृत्ववत्सहकारिसाहित्यस्यापि स्वभावानुप्रविष्टत्वात् सहकारिणो न कदापि त्यागादित्युक्तम् तदपि तथाऽपि समानमेव, सहकार्यसान्निध्ये सति न करोतीति नियमे सहकारिणः स्वकारणादागच्छतोऽपि निवार्य न कुर्यात्, तैर्विना हि न करोतीत्ययमस्य स्वभाव इति । तस्मात् यदुपनिबन्धेन यदि सहकारिणस्स्वकारणादागच्छे-युस्तदा कुर्यात्, यदि नागच्छेयुस्तदा न कुर्यादित्येवंविधे स्वभावे न कश्चिद्दोष इति । स्यादेतत्—तैस्सह करोति तैर्विना न करोतीति योऽस्य स्वभावः स यावदस्ति न वा अस्तीति पक्षे कारणोत्पत्तिकाल इव कार्योत्पत्तिकालेऽपि व्यतिरेकस्वभावस्य विद्यमानत्वेन सहकारिसाहित्ये सत्यपि कारणं कार्यं न कुर्यात्, अन्वयोक्तव्यतिरेकस्वभावहानिप्रसङ्ग इति । नास्तीति पक्षे सुतरां तद्वतोऽप्यभावः, न हि स्वभावमन्तरेण स्वभाविनस्सत्त्वं युक्तमित्यस्मन्मताभ्युपगमः कृतस्स्यादिति चेत्, तदपि तथापि मते समानमेव, तैस्सह कुर्वतो योऽस्य तैर्विना न करोतीति स्वभावः स यद्यस्ति, तदा न कुर्यादेव, तथा च क्षणिकवादपादोऽप्युच्छिद्येत, क्षणिकभावस्य द्वितीयक्षणावच्छेदेनाप्यर्थक्रियाकारित्वाभावेना-लीकरूपत्वादिति । यदि स नास्ति, तदा व्यतिरेकव्याप्त्यपायादन्वयव्याप्त्यपायादिति स्वरूप

हानिप्रसङ्गः। तथा च चाक्षमादोच्छित्तिरेव, अन्वयव्यतिरेकस्वभावद्वयमूर्त्तिकत्वात्क्षणिकभावस्य, स्वभावद्वयस्य च मिथोऽनुस्यूतत्वादेकस्याभावे तन्नियतद्वितीयस्याप्यभावेन निस्स्वभावत्वं स्यादिति भावः। निर्विशेषणत्वेन शुद्धस्वरूपधर्म्यस्त्येव, सहकारिभिर्विना न करोतीति व्यतिरेकस्वभावमात्रं तु तत्र नास्तीति चेत्, ममापि कार्याकरणकाले सहकारिसाहित्यस्य विशेषणस्याभावात्तद्विशिष्टान्वयस्वभावस्याभावेऽपि निर्विशेषणत्वेन शुद्धस्वरूपधर्म्यस्त्येवेति समः समाधिः, अन्यत्सर्वमनभ्युपगतोपालम्भमात्रमित्युपेक्षणीयमेवेति। तदेवं सुन्दोपसुन्दन्यायेनैकान्तक्षणिकाऽक्षणिकपक्षयोर्मिथः प्रतिहन्तृत्वान्नैकोऽप्येकान्तपक्षो युक्तः, किन्तु मिथस्सापेक्षभावेन स्याद्वादपक्ष एव युक्तः, गुडनागरसंयोगजन्यद्रव्यान्तरस्य विलक्षणतया कफपित्तोभयनाशकत्ववत् कथञ्चित्क्षणिकाक्षणिकोभयरूपत्वेनानेकान्तात्मकवस्तुनो जात्यन्तररूपतया तत्र प्रत्येकपक्षभाविदोषविनाशकत्वेन निराबाधस्वरूपतयोभयपक्षभाविदोषशङ्काकलङ्काऽकान्दिशीकत्वात्। एतच्च सविस्तरमस्मत्कृतस्याद्वादबिन्दुतोऽवसेयम्। अभिहितञ्च कलिकालसर्वज्ञश्रीहेमचन्द्राचार्येणान्ययोगव्यवच्छेदिकायामपि—

" य एव दोषाः किल नित्यवादे, विनाशवादेऽपि समास्त एव।
परस्परध्वंसिषु कण्टकेषु, जयत्यधृष्यं जिन! शासनं ते॥ २६॥" इति

ननु स्याद्वादपक्ष एव युक्त इत्यत्र को हेतुरिति चेत्, उच्यते, एकस्मिन्नेव देवदत्त आपेक्षिकपुत्रपितृनप्तृभागिनेयादिनानाव्यवहारस्यापेक्षिकलघुत्वमहत्त्वादिव्यवहारस्य चान्यथाऽनुपपत्त्या वस्तुमात्रे धर्मित्वस्वभावेनैकत्वस्येव परमार्थभूतेनौपाधिकस्वभावभेदेनानेकत्वस्यापि वस्तुभूतस्यानुभूयमानत्वादित्येव जानीहि। अत एव कार्यतात्मकनिरूपकभेदेन कारणतास्वभावभेदस्तावदन्यैरप्येकत्रावश्यं स्वीकर्त्तव्य एव, अन्यथा विविक्तव्यवहारोच्छेदस्स्यात्, न च स्वभावभेदः काल्पनिक इति विविक्तव्यवहारोऽपि कल्पनाशिल्पिनिर्मित एवेति वाच्यम्। तथा सति—

" सर्वं वै खल्विदं ब्रह्म, नेह नानास्ति किञ्चन।
आरामं तस्य पश्यन्ति, न तत्पश्यति कश्चन॥ १॥"

इत्याद्युक्त्या ब्रह्मविवर्त्तं जगदिति ब्रुवाणस्याभेदवादिवेदान्तिन एव विजयस्स्यात्, तैर्जगन्नानात्वस्य कल्पनामूलत्वेनाभ्युपगमात्। तस्मात्स्वभावभेदस्याऽपि परमार्थभूतत्वेन तत्प्रयोज्यानेकत्वस्यापि वास्तविकतयैकानेकस्वभावस्य वस्तुनः कथञ्चिन्नित्यानित्यतयैवार्थक्रियाक्षमत्वमवसेयमित्यलं पल्लवितेन, गौरवभीत्या नाधिकं प्रतन्यते। एतेनैकान्तद्रव्यमात्रवादोऽपि निरस्तः, कार्यकारणभावाभावे प्रवृत्तिनिवृत्त्युपेक्षाव्यवहाराऽभावेन निरीहं जगत्स्यात्, न च कार्यकारणभावः पारमार्थिको नास्ति, काल्पनिकस्त्वस्त्येवेति नोक्तदोष इति वाच्यम्, तस्यानेकप्रमाणसिद्धत्वेन सर्वलोकैरविगानेनाभ्युपगतत्वेन पारमार्थिकत्वात्, काल्प-

निरूपणे च प्रमाणाभावादिति । यद्यपि ब्रह्माद्वैतवादस्तु पूर्वमेव निरस्तस्तथापि किञ्चिन्निरस्यते, यच्च ब्रह्माद्वैतवादिना ' ब्रह्मैव सत् ' इत्याद्युक्तं तन्न समीचीनम्, सन् घटः सन् पट इत्यादिप्रत्ययात्मकप्रतीतौ चक्षुरिन्द्रियजन्यायां नीरूपस्य ब्रह्मणः सद्रूपस्य भानासम्भवेनोत्पादव्ययध्रौव्यात्मकसत्त्वलक्षणसत्त्वस्यैव कथञ्चिद् घटाद्यात्मकस्य चक्षुरादीन्द्रिययोग्यस्योक्तप्रतीतौ भासमानत्वेन सद्रूपस्य ब्रह्मणोऽसिद्धेः, उत्पादव्ययध्रौव्यात्मकत्वस्य च ब्रह्मण्यनुपगतत्वेन सदद्वैते उक्तप्रतीतेरनुभवावगाहित्वस्याप्यनुपपत्तेः, अतिरिक्तसत्तावादिनैयायिकादिमते तादृशसत्तासम्बन्धस्य भेदाभेदादिविकल्पदूषितत्वेन मानाभावप्रयोगेऽपि जैनाभ्युपगतोत्पादव्ययध्रौव्यात्मकसत्त्वस्य घटादिभिस्सर्वं कथञ्चिदभिन्नस्य विकल्पतो निरसितुमशक्यत्वात्, प्रपञ्चो मिथ्या दृश्यत्वादित्याद्यनुमानानां प्रपञ्चमिथ्यात्वसाधकानामपि मिथ्यात्वेन स्वयमेव वेदान्तिनाऽभ्युपगततया तैर्मिथ्यात्वसिद्धेरसम्भवात् सद्रूपस्य जगतो ब्रह्मविवर्तत्वमिति ' जगद्विवर्तरूपम् ' इत्यभिधानमप्ययुक्ताभिधानमेव, जीवकोटिव्यतिरिक्त ईश्वरो यथा न युक्त्या सिद्ध्यति तथा ब्रह्मापि, इति ब्रह्मप्रतिपादक आगमोऽपि च कर्मविनिर्मुक्त जीवात्मानमेव प्रतिपादयतीति न तेन जीवकोटिबहिर्भूतस्य ब्रह्मणः सिद्धिः, यदा च ब्रह्मविवर्तरूपं न जगत्, किन्तु प्रत्यक्षादिप्रमाणसिद्धस्वस्वकारणजन्यघटादिमत्त्वस्वरूपमेव, तदा ब्रह्मणि जगदारोपकल्पकतया दोषविधयाऽविद्याऽज्ञानादिपदवाच्यायाः परिणामिकारणात्मिकाया मायायाः कल्पनाऽपि युक्तिशून्यैवेति ' मायायाश्च अज्ञानपदवाच्याया विकाररूपं जगत् ' इति कथनमपि युक्तिरिक्तमेव, एवञ्च, ' तथा च ब्रह्मणो विवर्तः अज्ञानविकारश्च जगत् ' इति निगमनं दूरापेतम्, यदा च मायैव नास्ति तदा—

" अयं जीवो न कूटस्थं, विविनक्ति कदाचन ।
अनादिरविवेकोऽयं, मूलाविद्येति गम्यताम् ॥ २५ ॥
विक्षेपावृतिरूपाभ्यां, द्विधाऽविद्या व्यवस्थिता ।
न भाति नास्ति कूटस्थ, इत्यापादनमावृतिः ॥ २६ ॥
अविद्यावृतकूटस्थे, देहद्वययुता चितिः ।
शुक्तौ रूप्यवदध्यस्ता, विक्षेपाध्यास एव हि ॥ ३२ ॥ "

इत्यादिपञ्चदशीचित्रदीपप्रकरणोक्तस्य तत्प्रक्रियाभिधानं वेदान्तिनोऽन्धकारनर्तनमेव परीक्षकैः, तथा जैने वादाः कारणे परिणामिनि वा कार्ये परिणामो वा सदैव, न कारणमेव कार्यं किन्तु तद्भिन्नमेवापूर्वं तत्, न कार्यं न कारणम् किन्तु द्रव्यमात्रं तत्त्वम्, ब्रह्मात्र वा तत्त्वमिति नियमेनैकान्ताभ्युपगमे मिथ्यावादा एवेति सिद्धम् ॥ १० ॥

तदेवं स्वेतरधर्मभ्यो भिन्नमन्योन्यैकैकधर्मविशिष्टं वस्तु नैवानुभूयत इति नैकान्तात्मकं तत्, किन्तु स्वद्रव्यक्षेत्रकालभावावच्छेदेन सत्त्वादिधर्मस्यैव परद्रव्यक्षेत्रकालभावावच्छेदेन

तदभावरूपाऽसत्त्वादिधर्मस्याऽप्येकस्मिन् वस्तुन्यनुभूयमानत्वेन तदात्मकत्वेनानेकान्तात्मकमेव, न च सत्त्वतदभावयोर्विरोधान्नैकत्र सत्त्वम्, येन तदुभयात्मकत्वेनानेकान्तात्मकं वस्तु प्रमाणकोटिप्रविष्टं स्यादिति वाच्यम्, प्राचीननैयायिकमते शाखायां वृक्षः कपिसंयोगी न मूले इत्यबाधितानुभवबलात् शाखामूलादिविभिन्नावच्छेदेनैकस्मिन्नेव वृक्षे कपिसंयोगतदभावयोरिव नव्यनैयायिकमते शाखामूलावच्छेदेन कपिसंयोगितद्भेदयोरिव बौद्धमते चित्रज्ञाने नीलाकारत्वपीताकारत्वयोरिव स्वद्रव्यादिपरद्रव्यादितत्तन्निमित्तापेक्षया तयोरप्यविरुद्धत्वात्, अत एवाविरोधद्योतकस्यात्पदघटितमेव वाक्यं प्रयुञ्जते स्याद्वादतत्त्वज्ञाः।

"अप्रयुक्तेऽपि सर्वत्र, स्यात्कारोऽर्थात्प्रतीयते।
विधौ निषेधेऽन्यत्राऽपि, कुशलश्चेत्प्रयोजकः॥ १॥"

इत्युक्तेर्यत्रापि स्यात्पदाऽप्रयोगस्तत्रापि सर्वत्रार्थात्तं प्रतियन्ति एकान्तव्यवच्छेदाय, शङ्खः पाण्डुरः पार्थो धनुर्धरः, नीलं सरोजं भवतीत्ययोगस्यान्ययोगस्यात्यन्ताऽयोगस्य व्यवच्छेदायाप्रयुक्तमप्येवकारं प्रकरणसामर्थ्यात्तद्विदोऽवगच्छन्ति, तद्वदिति। विरुद्धधर्मद्वयस्य तत्तन्निमित्तापेक्षयाऽविरोधानभ्युपगमे नैयायिकवैशेषिकमते भ्रान्तज्ञाने धर्म्यपेक्षया प्रामाण्यं प्रकारापेक्षया चाऽप्रामाण्यमित्येवं प्रामाण्याप्रामाण्ये न स्याताम्। साङ्ख्यमतेऽपि एकस्या एव प्रकृतेस्त्रिगुणात्मकत्वं न स्यात्, बौद्धमतेऽपि चैकस्मिन्नेव चित्रज्ञाने नीलाकारत्वपीताकारत्वादिकं न स्यात्, उत्तररूपं प्रति पूर्वरूपस्योपादानकारणत्वम् उत्तररसम्प्रति निमित्तकारणत्वमित्यपि न स्यात्, स्वीकृतश्चोक्तवादिभिः प्रामाण्याप्रामाण्याद्युक्तधर्माऽविरोधो भ्रान्तज्ञानाद्युक्तस्थलेष्विति तत्र स्याद्वादमवलम्बमानास्ते वादिनो यदि सलज्जास्तदा भगवंस्तव मतं नैव निन्दन्ति, तन्निन्दायाः स्वपदकुठारप्रहारतुल्यत्वात्। यदुक्तं खण्डखाद्ये श्रीमहावीरस्तवापरनामके—

"साङ्ख्यः प्रधानमुपयंस्त्रिगुणं विचित्रां, बौद्धो धियं विशदयन्नथ गौतमीयः।
वैशेषिकश्च भुवि चित्रमनेकमेकं, वाञ्छन् मतं न तव निन्दति चेत् सलज्जः॥ ४४॥" इति।

कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिभिर्वीतरागस्तोत्रेऽप्युक्तम्—

"चित्रमेकमनेकं च, रूपं प्रामाणिकं वदन्।
यौगो वैशेषिको वाऽपि, नानेकान्तं प्रतिक्षिपेत्॥ १॥" इति

तथा चोक्तनीत्याऽनेकान्तात्मकतया वस्तुनि सिद्धे सर्वेऽपि सङ्ग्रहादयो नयाः परनयविषयाणामपि कथञ्चित्सत्त्वपतया तदसत्त्वज्ञापनाऽसमर्थत्वाच्च गजनिमीलिकान्यायेनौदासीन्यवृत्त्या वस्त्वेकदेशरूपस्वविषयपरिच्छेदरूपत्वात्तद्वति तत्प्रकारकत्वेन सम्यग्ज्ञानरूपा

अपीतरमपविषयपवच्छेदेन स्वविषये प्रवर्तमाना भ्रान्तज्ञानात्मकतया मिथ्यात्वं प्रतिपद्यन्त इत्युपसंहरन्नाह—

णिययवयणिज्जसच्चा, सव्वणया परवियालणे मोहा।
ते उण ण दिट्ठसमओ, विभयइ सच्चे व अलिए वा ॥ २८ ॥

'णियपवयणिज्जसच्चा' निजकवचनीये निज एव निजकः वक्तुं योग्यो वचनीयो निजकश्चासौ वचनीयश्च निजकवचनीयस्तस्मिम्, अथवा निज एव निजकस्तेन निजकेन स्वेन वचनीयः-प्रतिपाद्यो विषयस्तस्मिम् स्वविषये स्वांशे परिच्छेद्य इति यावत्, सत्याः सम्यग्ज्ञानरूपाः 'सव्वणया' सर्वनयास्सङ्ग्रहादयः, गजनिमीलिकान्यायेन शेषां नयानां स्वविषयांशेतरांशाऽप्रतिक्षेपित्वेन स्वविषयस्य सत्यरूपतया तद्भिन्नविशेष्यतानिरूपित तद्भिन्नप्रकारतानिरूपकत्वाच्चेषाम्। 'परवियालणे मोहा' परविचालने परविषयोत्खनने, स्वविषयमात्रस्यैव सत्यरूपतया व्यवस्थापनं कृत्वा परनयविषयस्याप्यसत्त्वेन ज्ञापने सतीति यावत्, मुह्यन्तीति मोहा मिथ्याप्रत्ययाः, नानानाधिकरण्यसम्बन्धेन स्वेतर-धर्माभावविशिष्टतद्धर्मस्यासामानवति तादृशतद्धर्मप्रकारकत्वात्, परविषयोत्खननेऽप्रवर्तो वा, परनयविषयस्यापि सत्यत्वेनोन्मूलयितुमशक्यत्वात्, स्वाभ्यनयविषयस्यापि स्व विपर्येण सहाविनाभावित्वेन तदभावे स्वविषयस्यापि सत्यत्वेनाव्यवस्थितेः, मिथो नान्तरीयकत्वात्। अतः परनयविषयस्याभावे स्वविषयस्याप्यसत्त्वात् तत्सत्यत्वस्य मिथ्या त्वमेवेत्यवधारणम् 'दिट्ठसमओ' दृष्टस्समयः सिद्धान्तराष्योऽनेकान्तात्मकः पदार्थो येन विदुषा स तथा, निर्णीतानेकान्ततत्त्व इति यावत्, 'ते उण' तानेव नयान्, पुन शब्दस्यावधारणार्थत्वात्, 'ण विभयइ सच्चे व अलिए वा,' नेति प्रतिषेधो विभजन क्रियायाः, तथा च सत्यान् अलीकान् वा न विभजते किन्त्वितरनयविषयसम्पेक्षतया 'अस्त्येव द्रव्यार्थतः' इत्येवं भजनया स्वमताभिप्रेतमर्थं सत्यमेवावधारयति, अवस्माद- मथप्रामाण्याऽप्रामाण्ययोर्नैरपेक्ष्यमवधारयति किन्त्वितरांशमपेक्षो यदंशो यदपेक्षया यत्र तत्र तदपेक्षया तदंशग्राहकत्वे तत्तन्नयानां प्रामाण्यम्, तद्वति तत्प्रकारकत्वात्, अन्यथा ग्राहकत्वे चाप्रामाण्यम्, तदभाववति तत्प्रकारकत्वादित्येवमनेकान्तमेव निश्चिनोति स्याद्वाद तत्त्वज्ञः। इयमेव गाथा गुरुतत्त्वविनिश्चये—

"णियपवयणिज्जसच्चा, सव्वणया परवियालणे मोहा।
ते पुण अदिट्ठसमओ, विभयइ सच्चे व अलिए वा ॥ ४५ ॥"

इत्येवं दृश्यते तत्र चास्या अयमर्थः कृतः—'विषय'त्ति निजकवचनीये सत्या अर्थ-प्रतिपादकत्वात् सर्वे यथा नैगमादयः, परस्य नयस्य विचारणे परेण नयेन निरासने तदा वैव परिस्यजन वा 'मोघा' विफला असत्या इति यावत्। अन्यार्थाप्रतिपादकत्वात्, अन्य

नयप्रतिबन्धेन स्वार्थप्रतिपादकत्वाद्वा । 'तान्' नयान् पुनः 'अदृष्टसमयः' अज्ञातसिद्धान्तपरमार्थः, विभजते एकान्तेन निश्चिनोति, सत्यान् अलीकान् वा, स्यात्सत्यत्वासत्यत्वप्रतिपादने तु दृष्टसमयत्वैवेति भावः ॥ २८ ॥

अतो नयप्रमाणात्मकैकरूपताव्यवस्थितमात्मस्वरूपमनुगतव्यावृत्तात्मकम् उत्सर्गापवादरूपग्राह्यग्राहकात्मकत्वाद् व्यवतिष्ठत इत्यर्थप्रदर्शनायाह—

दव्वट्ठियवत्तव्वं, सव्वं सव्वेण णिच्चमवियप्पं ।
आरद्धो य विभागो, पज्जववत्तव्वमग्गो य ॥ २९ ॥

'दवट्ठियवत्तंव' द्रव्यार्थिकवक्तव्यं—यत् किञ्चिद् द्रव्यार्थिकस्य सङ्ग्रहादेर्नयस्य सदादिरूपेण व्यवस्थितं वस्तु वक्तव्यं परिच्छेद्यं तत् 'सवं' सर्वं 'सवेण' सर्वेण प्रकारेण 'णिच्चं' नित्यं सर्वकालं 'अवियप्पं' अविकल्पं विकल्पो भेदस्तेन रहितम्, सर्वस्य सदसद्विशेषात्मकत्वात्, सङ्ग्रहनये यत्किञ्चिद्वस्तु तत्सद्रूपेण व्यवस्थितम्, सर्वस्य वस्तुनः सद्विशेषात्मकत्वेनाभिन्नत्वादेव, न चैवन्तर्हि सदात्मकत्वेनेत्येव वक्तव्यम्, न तु सद्विशेषात्मकत्वेन, तथा सति सतो विशेषस्सद्विशेषः, स च द्रव्यत्वपृथिवीत्वादिभेदरूप एवेति तदात्मकत्वेन निर्भेदत्वं न स्यादिति वाच्यम्, सश्चासौ विशेषः सद्विशेषः असद्व्यावृत्तस्वरूपस्तदात्मकत्वादित्यर्थस्यात्राश्रयणात्, तथा च सद्विशेषात्मकत्वादित्यनेन सदात्मकत्वादित्येवार्थो लब्धः, तथा च सद्रूपेण निर्भेदत्वं सङ्ग्रहनयेन सर्वस्य वस्तुन इति सिद्धम्, असद्विशेषात्मकत्वादिति च व्यवहारनयापेक्षयोक्तम्, तन्मते द्रव्यपृथिव्यादिरूपेण व्यवस्थितं सर्वं वस्तु नित्यं निर्भेदम्, असद्विशेषात्मकत्वात्, अत्र द्रव्यपृथिव्यादेस्सद्रूपत्वेऽपि महासामान्यसत्तातो भेदमाश्रित्यासद्रूपत्वं, तदेवाऽद्रव्यादितो व्यावर्त्तकत्वाद्विशेषरूपं तदात्मकत्वाद्द्रव्यार्थिकव्यवहारनयस्य परिच्छेद्यं सर्वं वस्तु द्रव्यत्वपृथिवीत्वादिना निर्भेदम्, यतोऽनुगतैकाकारप्रतीतिविषयत्वादेवाभेदस्तेन व्यवहारनयेनाश्रितः, अतो यद्रूपेण द्रव्यत्वपृथिवीत्वादिना स्वरूपसत्तात्मकेन साजात्यं तद्रूपेणानुगतैकाकारप्रतीतिविषयत्वादभिन्नत्वमित्यभिसन्धिः । तच्च भेदेन सम्पृक्तमिति प्रदर्शनार्थमुत्तरार्द्धमाह—"आरद्धो य विभागो, पज्जववत्तवमग्गो य" सङ्ग्रहनयेन विषयीकृतसत्तारूपो यश्चकारानुकर्षणीयोऽविभागस्स एव व्यवहारनयेन यद्द्रव्यत्वपृथिवीत्वादिकं द्रव्यपृथिव्यादिस्वरूपं द्रव्यपृथिव्यादिविभाजकं तदात्मकेन द्रव्यपृथिव्याद्याकारेण "आरद्धो य विभागो" आरब्धश्च प्रस्तुतश्च विभागो भेदः सङ्ग्रहनयाभ्युपगतमहासामान्यसत्तातो व्यवहारनयाभ्युपगतद्रव्यत्वपृथिवीत्वादिस्वरूपसत्ताया भेदलक्षणो द्रव्यपृथिव्यादिविशेषरूपो "पज्जववत्तवमग्गो य" पर्यायवक्तव्यमार्गश्च पर्यायास्तिकस्य यद्वक्तव्यं विशेषाख्यतत्त्वं तस्य मार्गः पन्था पर्यायार्थिकनयविषयविशेषरूपतां प्राप्तः । सङ्ग्रहनयेन सद्रूपेणैक्यमेव सर्वस्य वस्तुन उक्तं स्यात् तदा विशेषस्यावकाश एव नास्तीति

तद्विषयकस्य पर्यायार्थिकनयस्य प्रवृत्तिरेव न स्यात्, प्रवृत्तौ वा द्रव्यार्थिकनयनिरपेक्षैव तत्प्रवृत्तिर्भवेत्, यदा तु द्रव्यार्थिकनयस्य भेदरूपो निक्षेपरूपो यो व्यवहारस्य द्रव्यवृत्ति त्यादिरूपेण विशेषस्वरूपमपि स्वीकरोति तदा तद्विशेषान्तरविशेषपरम्परापर्यालोचनया पर्यायार्थिकनयविषयः सविकल्पविषयोऽपि भेदरूपो विचारमार्गमवतरत्येवेति सुकरा पर्यायार्थिकनयप्रवृत्तिस्तद्विषयेति, तदुभयनयापेक्षया कथञ्चिद्भेदसम्पृक्ताऽभेदात्मकमेव वस्त्वभ्युपगन्तव्यमिति भावः ॥ २९ ॥

एवं कथञ्चिद्भेदाभेदरूपं वस्तुस्वरूपं भेदस्य पर्यायार्थिकनयविषयस्य द्वैविध्यमाह—

सो उण समासओ चिय, वंजणणियओ य अत्थणियओ य ।
अत्थगओ य अभिन्नो, भइअव्वो वंजणवियप्पो ॥ ३० ॥

पर्यायार्थिकनयविषयविशेषात्मकभेदोऽपि शब्दनयनिबन्धनोऽर्थनयनिबन्धनश्चेति द्विभेदः, तत्र द्वितीयभेदरूपोऽर्थनयविषयोऽर्थपर्याय एकविध एव, अर्थनयेन सङ्ग्रहव्यवहारर्जुसूत्र लक्षणेनाभिन्नार्थपर्यायाभ्युपगमात् शब्दनयविषयव्यञ्जनपर्याय आद्यभेदस्वरूपस्तु भिन्नोऽभिन्नश्चेति भेदद्वयात्मकः, तत्र साम्प्रताख्यशब्दनये एकस्यार्थस्यानेकपर्यायशब्दो वाचक इत्यतो भिन्नः, समभिरूढनये एवम्भूतनये चैकस्यार्थस्यैक एव शब्दो वाचक इत्यतोऽभिन्न इति संक्षिप्तार्थः । विस्तरार्थस्त्वेवम्—'सो उण समासओ चिय' स इति तच्छब्दस्वरूपम्, तच्छब्दश्च पूर्वोपदर्शितपरामर्शक इति स पर्यायनयविषयः पूर्वप्रदर्शितो विभागः पुनस्समासतः संक्षेपतो द्विविध एव, द्विविधत्वमेवाह—'वंजणणियओ य अत्थणियओ य' व्यञ्जननियतश्च—व्यज्यते प्रकटीक्रियते योऽर्थोऽनेनेति व्यञ्जनं शब्दः, तथा च व्यञ्जनपदेन शब्दप्रधानत्वाच्छब्दनयो ग्राह्यः, तन्नियतः तन्निबन्धनः । अर्थनियतश्च—अर्यते—परिच्छिद्यते इत्यर्थः, प्रकृतेऽर्थशब्देनार्थप्रधानत्वादर्थनयो ग्राह्यः, तन्नियतः—तत्प्रयुक्तः पर्यायभेदः । तत्र प्रथमं द्वितीयभेदस्यैकविधत्वमुपदर्शयितुमाह—'अत्थगओ य अभिन्नो' अर्थगतश्च अभिन्नः, चकारस्त्वेवकारार्थे, अर्थगतस्तु विभागोऽभिन्नः "अत्थप्पवरं सद्दोवसज्जणं वत्थुमुज्जुसुत्तंता" इति भाष्यवचनात्सङ्ग्रहव्यवहारर्जुसूत्रान्ता अर्थनयाः, शब्दोपसर्जनतयाऽर्थप्राधान्येनैव वस्तुनः प्रत्ययोत्पत्तेः, ते चार्थप्रधानत्वाच्छब्दगतधर्मभेदेनार्थभेदं नाभ्युपगच्छन्तीति तद्विषयोऽर्थपर्यायोऽभिन्न एकप्रकारः, सङ्ग्रहोऽसङ्ख्यपर्यायभेदेनाभिन्नमनूपार्थपर्यायं व्यवहारोऽन्यान्यपर्यायभेदेनाभिन्नं व्यासरूपार्थपर्यायञ्च ऋजुसूत्रोऽतीतानागतपर्यायभेदेनाभिन्नवर्तमानार्थपर्यायञ्च मनुत इति सङ्ग्रहाद्यर्थनयविषयस्य क्रमशोऽसद्द्रव्यातीतानागतपर्यायस्थिताभिन्नार्थपर्यायरूपत्वात्, तद्विषयकार्थनयनियतः 'अर्थगतो विभागोऽभिन्नः' इत्युच्यते, अर्थनयविषयोऽर्थपर्याय एकविध इति भावः ।

पूर्वोक्ताद्यभेदस्य द्विविधत्वं प्रतिपादयितुमाह—'भइयव्वो वंजणवियप्पो' भक्तव्यो

व्यञ्जनविकल्पः, "सद्दप्पहाणमत्थोवसज्जणं सेसया विंति" इति भाष्यवचनादर्थोपसर्जनतया शब्दप्राधान्येन श्रोतुः प्रत्ययोत्पत्तेश्शब्दसमभिरूढैवम्भूताख्यशब्दनयत्रयविषयव्यञ्जनपर्यायो भाज्यो विकल्पनीयः, शब्दनये स्वस्ववाचकयावच्छब्दवाच्य एकोऽर्थः, समभिरूढादिनये शब्दतद्धर्मभेदेनार्थभेदाभ्युपगमादेकार्थवाचकपर्यायशब्दाभावात् पर्यायत्वेन शब्दनयाऽभ्युपगतशब्दभेदेन भिन्नोऽर्थः, तथा चैकस्यार्थस्यानेकशब्दो वाचक इत्यतो भिन्नो व्यञ्जनपर्यायः, एकस्यार्थस्यैक एव शब्दो वाचक इत्यतोऽभिन्नो व्यञ्जनपर्याय इत्येवं स भिन्नोऽभिन्नश्चेत्यर्थः। अयम्भावः—शब्दनयस्तावत्समानलिङ्गानां समानवचनानां शब्दानां भेदेऽपि तद्वाच्याऽर्थभेदं नाभ्युपैति घटकुटकुम्भकलशादिपर्यायशब्दभेदेऽपि तद्वाच्यस्यार्थस्य भावघटात्मकस्यैक्यात्, तथा च तन्मते समानलिङ्गसमानवचनान्तपर्यायशब्दभेदेऽप्यर्थैक्याभ्युपगमेनानेकाभिधानो भिन्नो व्यञ्जनविकल्पः, अत्राऽर्थस्याऽभेदेऽपि प्रधानीभूतवाचकशब्दभेदाद्भिन्नो व्यञ्जनपर्याय इति भावः। समभिरूढनयस्तु नैवमङ्गीकरोति, शब्दनयेन भिन्नलिङ्गभिन्नवचनानां स्त्री दारा आपो जलमित्यादिशब्दानामभ्युपगतस्याऽर्थभेदस्येव समभिरूढनयेन समानलिङ्गसङ्ख्यावचनानामपीन्द्रशक्रपुरन्दरादिशब्दानां घटकलशकुम्भनिपादिशब्दानाञ्च स्वस्ववाच्यार्थभेदस्याभ्युपगमात्, धातुप्रत्ययनिष्पन्नतत्तच्छब्दभिन्नभिन्नव्युत्पत्तिप्रतिपाद्यभिन्नभिन्नक्रियानिमित्तकाना तेषां भिन्नार्थत्वात्, निमित्तभेदाचार्थभेदो दृष्टः, छत्रिदण्ड्यादिवत्। तथा चेन्द्रपुरन्दरादिशब्दा न पर्यायात्मका भिन्नव्युत्पत्तिनिमित्तात्मकप्रवृत्तिनिमित्तत्वादित्यतस्तन्मते एकार्थ एकश्शब्दः, एकस्यार्थस्यैक एव शब्दो वाचक इत्यभिन्नो व्यञ्जनविकल्पः। एवम्भूतनयस्तु व्युत्पत्तिनिमित्तक्रियां यदैव यः करोति तदैव तच्छब्दवाच्यस्सोऽर्थ इत्यभ्युपैति, नान्यदेति चेष्टासमय एव घटो घटशब्दवाच्यः, अन्यथाऽतिप्रसङ्गादिति तत्तत्क्रियाविशिष्टस्यार्थस्य तत्तत्क्रियाव्युत्पत्तिनिमित्तक एक एव शब्दो वाचक इति तन्मतेऽप्यभिन्नो व्यञ्जनविकल्प इति। ननु व्यञ्जनविकल्पश्शब्दात्मा, स च वस्त्वन्तरत्वान्न पुरुषादेर्द्रव्यस्य धर्मः, येनासौ तस्य व्यञ्जनपर्यायो भवेदिति, चेत्, मैवम्, नामनामवतोरभेदाश्रयणेन पुरुष इति वाचकशब्दोऽपि पुरुषरूपार्थस्य व्यञ्जनपर्याय इत्यभ्युपगमादिति ॥ ३० ॥

अथ यद्वस्तु सङ्ग्रहविषयेण सद्रूपेणैकं व्यवहारविषयेण च द्रव्यत्वादिरूपेणैकं ऋजुसूत्रादिपर्यायार्थिकनयविषयेण पूर्वोक्ततत्तद्विशेषरूपेणानेकमित्येवमेकानेकस्वरूपं प्रदर्श्य तदेव वस्तु त्रैकालिकानन्तार्थपर्यायव्यञ्जनपर्यायात्मकत्वादनन्तप्रमाणमित्युपदर्शयितुमाह—

> एगदवियम्मि जे अत्थपज्जया वयणपज्जया वावि।
> तीयाणागयभूया, तावइयं तं हवइ दव्वं ॥ ३१ ॥

चतुर्थचरणोक्तं 'तं' इति यत्पदं तेन सह यच्छब्दस्य सम्बन्धाद् 'एगदवियम्मि'

यस्मिन्नेकद्रव्ये जीवादौ 'जे' च 'अत्थपज्जया' अर्थपर्यायाः–अर्थग्राहकाः सङ्ग्रह-व्यवहार-ऋजुसूत्राख्याः, तद्ग्राह्या वा तदर्थाः, 'वयणपज्जया वावि' वा–अथवा, वचनपर्याया अपि, शब्द-समभिरूढ-एवम्भूताख्याः शब्दनया अपि प्रत्येकपदार्थस्यानन्तप्रमाणत्वे तदर्थग्राहकतया परिणतानां नयानामप्यनन्तप्रमाणत्वमिति वचनपथाः, तद्विषयीभूता वस्त्वंशा वाऽपि, यत्तदोर्नित्यसम्बन्धात्ते 'तीयाणागयभूया' अतीतानागतभूता अतीतानागतवर्तमानकाला-वच्छिन्नविवर्तितविवर्त्स्यमाननिवर्तमानानन्तपरिणामाः 'चतुर्थचरणोक्तस्य 'तावइयं' इत्यस्य यावच्छब्देन सह नित्यसाकाङ्क्षत्वात् यावन्तः " तावइयं तं हवइ दव्वं " तावत्प्रमाणं तद्द्रव्यं भवति, पर्यायाणामानन्त्यात्कथञ्चित्तदभिन्नस्यास्य द्रव्यस्यापि तावत्प्रमाणं भवति, पुद्गलपर्यायत्वावच्छिन्नम्प्रति पुद्गलद्रव्यत्वेन पुद्गलद्रव्यस्योपादानभावः, न तु अन्यपृथिवीत्वावच्छि-न्नम्प्रति पृथिवीत्वेन अन्यजलत्वावच्छिन्नं प्रति जलत्वेनेत्यादिरूपेण सः, उपादानकारणत्वञ्च शक्तिविशेषरूपम्, न तु तदतिरिक्तं सामर्थ्यरूपम्, तथाभिव्यञ्जकविषया पुद्गलत्वमनवच्छेदक-मित्यतो मयूराण्डकरसे शिरोग्रीवाचञ्चुनेत्रपिच्छोदरचरणादिवदनेकवर्णवत्तद्रूप रसाद्यनुकूलानन्तशक्तिमदुपादानीभूतपुद्गलपरमाणुष्वप्यतीतानागतवर्तमानानन्ततत्पुद्गल पर्यायपरिणमनशक्तिसद्भावादनन्तकालेन विस्रसाप्रयोगादितत्सामग्रीसमवधाने सति सर्वेण वस्तुना सर्वावस्थानां परस्परानुगमेनासादितत्वात्तदवस्थानुभावत्वानां कथञ्चिदनन्त त्वात् घटादयस्सर्वे पदार्थाः पटपुरुषादिसर्वरूपेणापि कथञ्चिद्विवर्तन्ते विवर्ति ष्यन्त इति सर्वं सर्वात्मकं कथञ्चिदिति स्थितम्, दृश्यते चैकं पुद्गलद्रव्यमतीतानागत वर्तमानद्रव्य-गुण-कर्म-सामान्य-विशेष-परिणामात्मकं युगपत्क्रमेणापि तथाभूतमेव, एकान्ताऽसत उत्पादायोगात्, सतश्च निरन्वयविनाशासम्भवादिति । अत एव ह्याचार मलयगिरिपादसोत्कृष्टकर्मापिपदव्याख्यायां " एकः परमाणुर्वर्णगन्धरसस्पर्शपरिणामैः समभेदैः सामायिकैः पुरस्कृतैः पश्चात्कृतैश्च सर्वपुद्गलादिभिस्सार्धं योगिकैर्मानादन्त्यपर्यन्तैर्व सन्निकर्षैः प्रायोगिकैश्च कार्मणशरीरादिभिरभिसम्बध्यते " इत्युक्तं सङ्गच्छते ।

संवदति चात्र–" एएसि णं भंते ! परमाणुपोग्गलाणं साहणणाभेयाणुवाएणं अणंताणंता पोग्गलपरियट्टा समणुगंतव्वा भवंतीति मक्खाया ? हंता गोयमा ! एएसि णं परमाणु पोग्गलाणं साहणणा जाव मक्खाया ।। कतिविहे णं भंते ! पोग्गलपरियट्टे पण्णत्ते ? गोयमा ! सत्तविहा पो० परि० पण्णत्ता, तं जहा–ओरालियपोग्गलपरियट्टे वेउव्वियपो० तेयापो० कम्मापो० मणपो०परियट्टे वइपोग्गलपरियट्टे आणापाणुपोग्गलपरियट्टे " इति व्याख्या प्रज्ञप्तिद्वादशशतकचतुर्थोद्देशगतवचनमपीति ।। एएसि णं इत्यादि, एतेषां अनन्तरो-क्तस्वरूपाणां परमाणुपुद्गलानां परमाणूनामित्यर्थः, साहणणाभेयाणुवाएणं ति–साहणण त्ति प्राकृतत्वात् संहननं–संघातो, भेदश्च वियोजनं, तयोरनुपातो–योगः संहननभेदानुपातस्तेन, सर्वपुद्गलद्रव्यैः सह परमाणूनां संयोगेन वियोगेन चेत्यर्थः । अणंताणंत त्ति अनन्तेन गुणिता

अपीतरनयविषयव्यवच्छेदेन स्वविषये प्रवर्त्तमाना भ्रान्तज्ञानात्मकतया मिथ्यात्वं प्रतिपद्यन्त इत्युपसंहरमाह—

> णिययवयणिज्जसच्चा, सव्वणया परवियालणे मोहा।
> ते उण ण दिट्ठसमओ, विभयइ सच्चे व अलिए वा ॥ २८ ॥

'णिययवयणिज्जसच्चा' निजकवचनीये निज एव निजकः वक्तुं योग्यो वचनीयो निजकश्चासौ वचनीयश्च निजकवचनीयस्तस्मिन्, अथवा निज एव निजकस्तेन निजकेन स्वेन वचनीयः-प्रतिपाद्यो विषयस्तस्मिन् स्वविषये स्वांशे परिच्छेद्य इति यावत्, सत्याः सम्यग्ज्ञानरूपाः 'सव्वणया' सर्वनयास्संग्रहादयः, गजनिमीलिकान्यायेन तेषां नयानां स्वविषयांशेतरांशाऽप्रतिक्षेपित्वेन स्वविषयस्य सत्यरूपतया तदभिन्नविशेष्यतानिरूपित तदभिन्नप्रकारतानिरूपकत्वात्तेषाम्। 'परवियालणे मोहा' परविचालने परविषयोत्खनने, स्वविषयमात्रस्यैव सत्यरूपतया व्यवस्थापनं कृत्वा परनयविषयस्याऽसत्यत्वेन ज्ञापने सतीति यावत्, मुह्यन्तीति मोहा मिथ्याप्रत्ययाः, सामानाधिकरण्यसम्बन्धेन स्वेतरधर्माभावविशिष्टतद्धर्मस्याभाववति तादृशतद्धर्मप्रकारकत्वात्, परविषयोत्खननेऽप्रवर्त्ता वा, परनयविषयस्यापि सत्यत्वेनोन्मूलयितुमशक्यत्वात्, स्वाभ्युपगतविषयस्यापि स्व विपर्ययेण सहाविनाभावित्वेन तदभावे स्वविषयस्यापि सत्यत्वेनाप्यवस्थितेः, मिथो नान्तरीयकत्वात्। अतः परनयविषयस्याभावे स्वविषयस्याप्यसत्त्वात् तत्प्रत्ययस्य मिथ्यात्वमेवेत्यवधारणम् 'दिट्ठसमओ' दृष्टसमयः सिद्धान्ततत्त्वज्ञोऽनेकान्तात्मकः पदार्थो येन विदुषा स तथा, निर्णीतानेकान्ततत्त्व इति यावत्, 'ते उण' तानेव नयान्, पुनः शब्दस्यावधारणार्थत्वात्, 'न विभयइ सच्चे व अलिए वा,' नेति प्रतिषेधो विभजन क्रियायाः, तथा च सत्यान् अलीकान् वा न विभजते किन्त्वितरनयविषयसव्यपेक्षतया 'अस्त्येव द्रव्यार्थतः' इत्येवं भजनया स्वमताभिप्रेतमर्थं सत्यमेवावधारयति, अथ भावा-नयप्रामाण्याऽप्रामाण्ययोर्नैकान्त्यमवधारयति किन्त्वितरांशसापेक्षो यद्वंशो यदपेक्षया यत्र तत्र तदपेक्षया तद्ग्राहकत्वे तन्नयानां प्रामाण्यम्, तद्वति तत्प्रकारत्वात्, अन्यथा ग्राहकत्वे चाप्रामाण्यम्, तदभाववति तत्प्रकारकत्वादित्येवमनेकान्तमेव निश्चिनोति स्याद्वाद तत्त्वज्ञः। इयमेव गाथा गुरुतत्त्वविनिश्चये—

> "णिययवयणिज्जसच्चा, सव्वणया परवियालणे मोहा।
> ते पुण अदिट्ठसमओ, विभयइ सच्चे व अलिए वा ॥ ४५ ॥"

इत्येवं दृश्यते तत्र चास्या अयमर्थः कृतः—'णियय' त्ति निजकवचनीये सत्या अर्थप्रतिपादकत्वात् सर्वे नया नैगमादयः, परस्य नयस्य विचारणे परेण नयेन विचालने स्वार्थस्य परित्याजने वा 'मोघा' विफला असत्या इति यावत्। अन्यार्थाप्रतिपादकत्वात्, अन्य

नयप्रतिबन्धेन स्वार्थप्रतिपादकत्वाद्वा । 'तान्' नयान् पुनः 'अदृष्टसमयः' अज्ञातसिद्धान्तपरमार्थः, विभजते एकान्तेन निश्चिनोति, सत्यान् अलीकान् वा, स्यात्सत्यत्वासत्यत्वप्रतिपादने तु दृष्टसमयतैवेति भावः ॥ २८ ॥

अतो नयप्रमाणात्मकैकरूपताव्यवस्थितमात्मस्वरूपमनुगतव्यावृत्तात्मकम् उत्सर्गापवादरूपग्राह्यग्राहकात्मकत्वाद् व्यवतिष्ठत इत्यर्थप्रदर्शनायाह—

दव्वट्ठियवत्तव्वं, सव्वं सव्वेण णिच्चमवियप्पं ।
आरद्धो य विभागो, पज्जववत्तव्वमग्गो य ॥ २९ ॥

'दव्वट्ठियवत्तव्वं' द्रव्यार्थिकवक्तव्यं–यत् किञ्चिद् द्रव्यार्थिकस्य सङ्ग्रहादेर्नयस्य सदादिरूपेण व्यवस्थितं वस्तु वक्तव्यं परिच्छेद्यं तत् 'सव्वं' सर्वं 'सव्वेण' सर्वेण प्रकारेण 'णिच्चं' नित्यं सर्वकालं 'अवियप्पं' अविकल्पं विकल्पो भेदस्तेन रहितम्, सर्वस्य सदसद्विशेषात्मकत्वात्, सङ्ग्रहनये यत्किञ्चिद्वस्तु तत्सद्रूपेण व्यवस्थितम्, सर्वस्य वस्तुनः सद्विशेषात्मकत्वेनाभिन्नत्वादेव, न चैवन्तर्हि सदात्मकत्वेनेत्येव वक्तव्यम्, न तु सद्विशेषात्मकत्वेन, तथा सति सतो विशेषस्सद्विशेषः, स च द्रव्यत्वपृथिवीत्वादिभेदरूप एवेति तदात्मकत्वेन निर्भेदत्वं न स्यादिति वाच्यम्, सश्चासौ विशेषः सद्विशेषः असद्व्यावृत्तस्वरूपस्तदात्मकत्वादित्यर्थस्यात्राश्रयणात्, तथा च सद्विशेषात्मकत्वादित्यनेन सदात्मकत्वादित्येवार्थो लब्धः, तथा च सद्रूपेण निर्भेदत्वं सङ्ग्रहनयेन सर्वस्य वस्तुन इति सिद्धम्, असद्विशेषात्मकत्वादिति च व्यवहारनयापेक्षयोक्तम्, तन्मते द्रव्यपृथिव्यादिरूपेण व्यवस्थितं सर्वं वस्तु नित्यं निर्भेदम्, असद्विशेषात्मकत्वात्, अत्र द्रव्यपृथिव्यादेस्सद्रूपत्वेऽपि महासामान्यसत्तातो भेदमाश्रित्यासद्रूपत्वं, तदेवाऽद्रव्यादितो व्यावर्त्तकत्वाद्विशेषरूपं तदात्मकत्वाद्द्रव्यार्थिकव्यवहारनयस्य परिच्छेद्यं सर्वं वस्तु द्रव्यत्वपृथिवीत्वादिना निर्भेदम्, यतोऽनुगतैकाकारप्रतीतिविषयत्वादेवाभेदस्तेन व्यवहारनयेनाश्रितः, अतो यद्रूपेण द्रव्यत्वपृथिवीत्वादिना स्वरूपसत्तात्मकेन साजात्यं तद्रूपेणानुगतैकाकारप्रतीतिविषयत्वादभिन्नत्वमित्यभिसन्धिः । तच्च भेदेन सम्पृक्तमिति प्रदर्शनार्थमुत्तरार्द्धमाह—"आरद्धो य विभागो, पज्जववत्तवमग्गो य" सङ्ग्रहनयेन विषयीकृतसत्तारूपो यश्चकारानुकर्षणीयोऽविभागस्स एव व्यवहारनयेन यद्द्रव्यत्वपृथिवीत्वादिकं द्रव्यपृथिव्यादिस्वरूपं द्रव्यपृथिव्यादिविभाजकं तदात्मकेन द्रव्यपृथिव्याद्याकारेण "आरद्धो य विभागो" आरब्धश्च प्रस्तुतश्च विभागो भेदः सङ्ग्रहनयाभ्युपगतमहासामान्यसत्तातो व्यवहारनयाभ्युपगतद्रव्यत्वपृथिवीत्वादिस्वरूपसत्ताया भेदलक्षणो द्रव्यपृथिव्यादिविशेषरूपो "पज्जववत्तवमग्गो य" पर्यायवक्तव्यमार्गश्च पर्यायास्तिकस्य यद्वक्तव्यं विशेषाख्यतत्त्वं तस्य मार्गः पन्था पर्यायार्थिकनयविषयविशेषरूपतां प्राप्तः । सङ्ग्रहनयेन सद्रूपेणैक्यमेव सर्वस्य वस्तुन उक्तं स्यात् तदा विशेषस्यावकाश एव नास्तीति

तत्त्वार्थप्रथमाध्यायविवरणटीकायां च विस्तरेण कृतमिति तत एव चावसेयम्, ग्रन्थगौरव-भीत्या नेह प्रतन्यते ॥ ६३ ॥

अल्पाक्षरमसंदिग्धं सारवद् विश्वतो मुखम्। अस्तोभमनवद्यञ्च, सूत्रं सूत्रविदो विदुः ॥ १ ॥ इति लक्षणं सूत्रम्, अत एव महापुरुषप्रणीतत्वेन गम्भीरार्थमिति न तन्मात्रं प्रमाणनयगर्भतात्पर्यार्थबोधक्षमम्, किन्तु पदार्थवाक्यार्थमहावाक्यार्थैदम्पर्यार्थभेदभिन्न-व्याख्यानद्वारैवेति प्रतिपादयितुमाह—

सुत्तं अत्थनिमेणं न सुत्तमेत्तेण अत्थपडिवत्ती।
अत्थगई उण णयवायगहणलीणा दुरभिगम्मा ॥ ६४ ॥

'सुत्तं' अल्पाक्षरैर्बह्वर्थान् सूचयतीति सूत्रम्, 'अत्थनिमेणं' अर्यते परिच्छिद्यत इत्यर्थः, स च द्विविधः, तत्रैकोऽर्थस्सूत्रेण सूत्रितः साक्षात्सूत्रस्याऽभिधेयः, द्वितीयश्च सूचितोऽर्थापत्त्याऽऽक्षिप्तः, सामर्थ्यगम्य इति यावत्, अत एव चतुर्दशभिरपि पूर्वैः कश्चित्साक्षात्, कश्चित्तु गम्यतया सर्वोऽप्यभिलाप्यः पदार्थोऽभिधीयत एवेति विशेषावश्यकटीकोक्तं सङ्गच्छते, तस्य निमेनं स्थानं सूत्रम्, अनन्तार्थभृतमेव सूत्रम्, अर्थप्रतिपत्तिश्च न निर्युक्त्यादिनिरपेक्षसूत्रमात्रेण, यतः 'मूअं केवलसुत्तं जीहा पुण होइ पायडा अत्थो ॥ १५५ ॥' इत्युपदेशरहस्योक्तेर्व्याख्यानरहितं सूत्रं मूकं मूकपुरुषतुल्यम् कस्यचिदर्थस्याऽवाचकम्, सूत्रमात्रेण प्रमाणतत्त्वनयगर्भतात्त्विकार्थाऽप्रतीतेः, अर्थः पुनः प्रकटा जिह्वा, परावबोधहेतुत्वात्। अर्थः पुनः—"पयवक्कमहावक्कत्थमेदंपज्जं च एत्थ चत्तारि। सुयभावाऽवगमम्मि हंदि पगारा विणिदिट्ठा ॥ ८५९ ॥" इत्युपदेशपदोक्तेः सूत्रमात्रावगमहेतुभूतः पदार्थवाक्यार्थमहावाक्यार्थैदम्पर्यार्थभेदेन चतुर्द्धा भणितः। तत्र पदार्थो यथाश्रुतार्थः, पद्यते गम्यतेऽर्थः सामान्यरूपोऽचालिताऽप्रत्यवस्थापितो येनेति व्युत्पत्तेः। तदाह—"अत्थपदेण हु जम्हा एत्थ पयं होइ सिद्धं" इति। वाक्यार्थो दूषणोक्तिलक्षणचालनात्मकः, महावाक्यार्थश्च युक्त्या दूषणपरिहारलक्षणप्रत्यवस्थानायोच्चरितस्य वाक्यसमूहात्मकमहावाक्यस्यार्थः, ऐदम्पर्यार्थश्च तात्पर्यार्थः। एवं प्रतिसूत्रमुक्तक्रमेण व्याख्याने निश्चितप्रामाण्यकं सम्यग्ज्ञानं व्युत्पन्नस्य निराकाङ्क्षप्रतीतिरूपं स्यात्, तच्च वाक्यार्थादिज्ञाने शब्दप्रयोज्यमतिरूपं श्रुतज्ञानाभ्यन्तरं ब्रुवते श्रुतवृद्धाः, अत एव समानाक्षरलाभानां चतुर्दशपूर्वविदामपि षट्स्थानपतितत्वं यथोक्ताक्षरलाभानुसारिभिरेव तैस्तैर्गम्यार्थविषयकैः क्षयोपशमवैचित्र्यादिविचित्रैर्मतिविशेषैश्श्रूयते, तथा चोक्तं विशेषावश्यकभाष्ये—"अक्खरलम्भेण समा ऊणहिया होंति मईविसेसेहिं। ते वि य मईविसेसे सुयनाणब्भंतरे जाण। १४३।" इति। 'अत्थो वक्खाणं ति य एगट्ठा ॥ ८५६ ॥' इत्युपदेशपदवचनाद् जिह्वातुल्यनिर्युक्त्यादिव्याख्यानात्म-

कार्यसापेक्षत्वेन निश्चितप्रामाण्यकवाक्यपर्यायप्रतीतिः, न तु सूत्रमात्रेणेत्याह ' न सुत्तमेत्तेण अत्थपडिवत्ती ' न सूत्रमात्रेणार्थप्रतिपत्तिः, निस्सीमसिद्धान्ताबाधितपरमार्थग्राहिबुद्धिरत्न निधिगुरुपरम्पराविदितसूत्रार्थमार्गाचार्यकृतव्याख्यानरहितेन सूत्रेणार्थप्रतिपत्तिः पौर्वापर्याबाधितार्थप्रतिपत्तिर्न, अविद्धतेन सूत्रेणायथार्थप्रतीतेरपि भावात्। यथाऽवस्थितार्थप्रतिपत्तिस्सूत्रमात्रेण दुरापेत्यत्र हेतुगर्भविशेषणमाह ' अत्थगई पुण णयवायगहणलीणा ' ये गत्यर्थास्ते ज्ञानार्था इति वचनात् अर्थगतिः अर्थस्य यथाऽवस्थितस्य मतिः प्रतिपत्तिः पुनर्नयवादगहनलीना, " नत्थि णएण विहूणं सुत्त अत्थो य जिणमए किंचि " इत्युक्तेः सप्तशतप्रभेदविविधैकैकनैगमादिसप्तनयभेदविविधद्रव्यार्थिकपर्यायार्थिकनय वादरूपं गहनं विपिनम्, तत्र लीना तदात्मा तद्विषयविषयिकेति यावत्, अत एव ' दुरभिगम्मा ' दुरधिगम्या दुरवबोधेत्यर्थः ॥ ६४ ॥

अशेषनयगहनात्मकत्वादपि दुरधिगमार्थविषयकत्वेन कुशाग्रबुद्धिभिरेवासेव्या इति तस्य दुरधिगम्यार्थप्रतिपत्तिरपि मन्दमेधसां दुष्करेत्यतोऽधीतसूत्रार्थसम्पादने विधिनाऽधिकतरो यत्नः कर्तव्यः, यतोऽर्थशुद्धेरुभयविशुद्धिस्सम्यग्ज्ञानमयनिर्मलतारूपा सम्पद्यते, अन्यथा विपरीतयथार्थप्रतिपत्तिलक्षणविपर्यासप्रापकशासनमालिन्यकारित्वं स्यादित्याशयेनाह—

तम्हा अहिगयसुत्तेण, अत्थसंपायणम्मि जइयव्वं।
आयरियधीरहत्था, हंदि महाणं विलंबेन्ति ॥ ६५ ॥

' तम्हा अहिगयसुत्तेण ' तस्मात् सूत्रादर्थो बलीयानिति हेतोः, अधिगतसूत्रेण अधिगतमधीतमशेषं सूत्रं येनासौ अधिगतसूत्रः, तेन, ' अत्थसंपायणम्मि जइयव्वं ' अर्थसम्पादने, अर्थविषयकप्रमाणनयसप्तभङ्गस्वरूपावधारणे, पतितव्यं दृढयत्नपरेण भाव्यम्, ततो यत्नः कर्तुमुचित इति यावत्। अधीत्य सूत्रं नयप्रयुक्तितत्परप्रतिस्पर्धिनयपुक्ति संवादः श्रोतव्यः, श्रुत्वा च सर्वनयसंवादविनिश्चयपरिशुद्धयथावस्थितार्थतया सूत्रं भावनीयम्, प्रमाणपरस्परसापेक्षनयापेक्षयाऽनेकान्तार्थप्रतिपादकतया सूत्रपदार्थतात्पर्यमाव माऽकरण चातुर्यमविहम्बनादोषप्रतिपादनायोक्तमाह—" आयरियधीरहत्था " आचार्यधीरहस्ताः, धीरो कर्मादिनयविभाजनादिरहितत्वेन पूर्णताग्राही हस्तो येषां ते धीरहस्ताः, आचार्याश्च ते धीरहस्ताश्च आचार्यधीरहस्ताः, यथा केचिदनभ्यस्तकर्माणोऽपि धृष्टतया कर्मणि व्यापृतहस्ताः तथा सद्गुरूपासनादिभिरधिगतनयगर्भशास्त्रार्था अपि शास्त्रार्थविवेचने धृष्टतया व्यापृताः, एवम्भूताऽऽचार्याः किं कुर्वन्तीत्याकाङ्क्षायामाह—" हंदि महाणं विलंबेंति " महाऽऽज्ञामात्मज्ञानं विडम्बयन्तीति ज्ञापयाम्, तदेवमनधीताऽश्रुत यथावदपरिभावितागमतात्पर्या जिनशासनं विडम्बयन्तीति सिद्धम् ॥ ६५ ॥

बहुश्रुतत्वादिदर्पात्सूत्रतात्पर्यार्थानवधारणादनिश्चितयथार्थस्य सिद्धान्तप्रत्यनीकत्वमाह—

जह जह बहुस्सुओ संमओ अ, सिस्सगणसंपरिवुडो अ।
अविणिच्छिओ अ समए, तह तह सिद्धंतपडिणीओ ॥ ६६ ॥

'जह जह बहुस्सुओ' यथा यथा बहुश्रुतः परिपठितबह्वागमः श्रुतपल्लवग्राहितया बहुश्रुतत्वख्यातिमानिति यावत्, 'संमओ अ' सम्मतश्च सिद्धान्तोपनिषद्विचारचतुरजनाविदितशास्त्राभिप्रायाणां गतानुगतिकप्रवाहपतितानां तदनुवर्तिनां चान्येषां बाह्याडम्बरदर्शनमात्रोदितविस्मयानां मुग्धमतीनां च शास्त्रज्ञत्वेन बहुमतः, 'सिस्सगणसंपरिवुडो अ' शिष्यगणसंपरिवृतश्च शास्त्रतत्त्वानभिज्ञैर्विनेयवृन्दैः समन्तात् परिवृतश्च 'अविणिच्छिओ अ' अविनिश्चितश्च तथाविधपरिवारदर्पाच्छास्त्रपर्यालोचनेऽनादरादविनिश्चितागमैदम्पर्यश्च, यद्वा सम्यगपरिणतश्च प्रवचने ऐदम्पर्याऽज्ञानात् विरत्यप्रह्वत्वाच्च, 'तह तह सिद्धंतपडिणीओ' तथा तथा सिद्धान्तप्रत्यनीकः, यथावदपरिभावितागमतात्पर्यस्सोऽपरिणतदेशनया यथास्थितसिद्धान्तस्य विपर्यासापादनान्मुग्धजनानामश्रद्धोत्पादकत्वेन वस्तुस्थित्या सिद्धान्तविनाशकः, अन्यागमेभ्यस्तल्लाघवापादनादिति। अभिहितश्च सिद्धान्ते—

"सव्वन्नूहिं पणीयं, सो उत्तममइसएण गंभीरं।
तुच्छकहणाइ हिट्ठा, सेसाण वि कुणइ सिद्धंतं ॥ १ ॥
अविणिच्छिओ ण सम्मं, उस्सग्गाववायजाणओ होइ।
अविसयपओगओ सिं, सो सपरविणासओ नियमा ॥ २ ॥" इति।

तदर्थश्चायम्—सर्वज्ञैः प्रणीत सोऽविनिश्चित उत्तमं प्रधानमतिशयेन गंभीर भावार्थसारं तुच्छकथनया अपरिणतदेशनयाऽधः शेषाणामपि सिद्धान्तानां करोति तथाविधलोकं प्रति सिद्धान्तमिति गाथार्थः। अविनिश्चितः समये न सम्यगुत्सर्गापवादज्ञो भवति सर्वत्रैव, ततश्चाऽविषयप्रयोगतोऽनयोरुत्सर्गापवादयोस्तथाविधस्स्वपरविनाशको नियमात् कूटवैद्यवदिति गाथार्थः ॥ ६६ ॥

तस्माच्छास्त्रमधीत्य तदर्थावधारणं विधेयम्, अवधृतश्च तदर्थो प्रमाणनयाभिप्रायतो यथावत्परिभावनीयः, अन्यथा तत्फलपरिज्ञानविकलताप्रसक्तिस्स्यादित्यत आह—

यद्वा स्याद्वाद एव प्रवचनसारः, एतद्बोधेनैव प्रवचनस्य फलवत्त्वात्, "एगे आया" इत्यादिनापि तन्त्रपरिकर्मितमतीनामात्मा स्यादेकः स्यादनेक इत्यादिसप्तभङ्गीपरिकरितबोधस्यैवोत्पत्तेः, एकनयावधारणे मिथ्यादृष्टिवचनाऽविशेषप्रसङ्गात्। अत एव भगवदुपदिष्टया प्रवचनमूलत्रिपद्याप्येकवस्तुनि द्रव्यार्थिकपर्यायार्थिकनयापेक्षकथञ्चिन्नित्यत्वानित्यत्वोभयधर्मसमावेशलक्षणस्याद्वाद एव प्रोक्त इत्येतस्मिन्नऽविज्ञाते चरणकरणानुष्ठानस्य निश्चयशुद्धस्साराोऽविज्ञातस्स्यात्, स्याद्वादमुद्रामुद्रितजीवाजीवादिनवतत्त्वविषयकापायज्ञानात्मकरुचिरूपसम्यग्दर्शनशुद्धिशून्यत्वादिति प्रतिपादयितुमाह—

मार्गानुसारिणो परसम्यक्त्वं तद्गमेन भुवते निपुणाः स्याद्वादप्रतिपत्तियोग्यतावास्त्र सन्यनिर्जरामकर्मक्षयोपशमरूपायासेष्वसम्भितत्वात्। अमिहितञ्च—

" जिणवयणमेव तत्तं, एत्थ रुई होइ दव्वसम्मत्तं ।
जह भावा माणसिद्धा, परिसुद्धं तस्स सम्मत्तं ॥ " इति ।

एतच्च विवेचितं प्रागेव। यद्वा मे पदोदितचरणकरणप्ररूपणासेवनद्वारेण प्रधानादाचार्यात् स्वसमयपरसमयमुक्तम्यापारा न भवन्तीति ममोऽत्र सम्बन्धात् ते चरणकरणसारं निश्चयशुद्धं आनन्त्येव, ग्राह्यया प्रवृत्तेरिति ॥ १७ ॥

परस्परनिरपेक्षे ज्ञानक्रिये न मोक्षप्रापिके किन्तु परस्परसापेक्षे एव ते, यतो मोक्षस्य चक्रिसम्प्रति न केवलक्रिया, न वा ज्ञानमात्रं कारणम्, किन्तु मोक्षानुकूलप्रक्रियमपेक्ष रूपेण मिथस्सापेक्षज्ञानक्रियोभयमेवेति प्रतिपादयितुमाह—

णाणं किरियारहियं, किरियामेत्तं च दो वि एगंता ।
असमत्था दाएउं, जम्म-मरणदुक्खमा भाई ॥ १८ ॥

' णाणं किरियारहियं ' ज्ञानं स्याद्वादाद्वितजीवादिपदार्थसार्थप्रकाशकं ज्ञानं क्रियारहितं ज्ञानविहितपञ्चमहाव्रतादिसदनुष्ठानक्रियानिरपेक्षम्, ' किरियामेत्तं च ' क्रियामात्रं च, मात्रपदेन शदितस्यबच्छेदानुकूलसम्यग्ज्ञाननिरपेक्षा क्रिया च यथोक्तानुष्ठानात्मिका, ' दो वि एगंता ' ' द्वावप्येकान्तौ ' अम्यते गम्यते निर्णीयते इत्यन्ताः, धर्माः, एतद्व्यावस्यैकान्ता, एकान्तमैकान्तावेकान्तौ, मिथापेक्षाप्रविरुद्धधर्मान्तरविनिर्मुक्तत्वेन केवलैकधर्मा स्मकौ द्वावपि यतौ ' जम्ममरणदुक्खमामाई ' जन्ममरणदुःखेभ्यो मा भैषीरिति ' दाएउं असमत्था ' दर्शयितुमसमर्थौ। नन्वेवं तर्हि तेभ्यो मा भैषीरिति दर्शयितुं कस्समर्थ इति चेत्, उच्यते, परस्परसापेक्षसमुदितद्वयात्मकपक्ष एव, तथाहि-पुरुषो न ज्ञानमात्रेण भयेभ्यो मुच्यते क्रियारहितत्वात् महानगरे दह्यमाने सति दृष्टपलायनमार्गपङ्गुवत्, न वा पुरुषः क्रियामात्रेण भयेभ्यो मुच्यते सज्ज्ञानरहितत्वात् महानगरे प्रदीप्यमाने सति दह्यमानपुरायमिमुखपलायमाना चवत्। तदुक्तं विशेषावश्यकनिर्युक्तौ—

" हयं नाण कियाहीणं, हया अन्नाणओ किया ।
पासंतो पंगुलो दड्ढो, धावमाणो अ अंधओ ॥ १ ॥ " इति ॥ ११५९ ॥

यद्वा ज्ञानमात्रं नेप्सितार्थप्रापकं सत्क्रियासहकृतज्ञानत्वात्, महारण्यदाहे सति दृष्टपलायनमार्गस्वदेशप्राप्त्यभिमुखगमनक्रियाशून्यपङ्गुज्ञानवत्, क्रियाऽपि केवला नेप्सितार्थ साधिका सज्ज्ञानासहकृतक्रियात्वात्, अविरलज्वलद्दाहे दह्यमानपुरायमिमुखप्रपलायमानान्धपुरुषगतिक्रियावत्। समुदितज्ञानक्रियोभयपक्षे त्वेवमनुमानप्रयोगः-सम्यग्ज्ञान

सम्यक्क्रियोभयवान् पुरुषो भयेभ्यो मुच्यते उभयसंयोगवत्त्वात्, महाऽऽरण्यदाहभीतान्ध-स्कन्धारूढपङ्गुवदिति । तदुक्तं विशेषावश्यकनिर्युक्तौ—

" संजोगसिद्धीए फलं वयंति, न हु एगचक्केण रहो पयाइ ।
अंधो य पंगू य वणे समिच्चा, ते संपउत्ता नगरं पविट्ठा ॥१॥ " इति ।

एतदर्थसंवादकतयोक्तश्चान्यत्र—

" चक्षुष्मानेकः स्यादन्धोऽन्यस्तन्मतानुवृत्तिपरः ।
गन्तारौ गन्तव्यं प्राप्नुत एतौ युगपदेव ॥ १ ॥ " इति ।

यद्वा सम्यक्क्रियासम्यग्ज्ञानोभयं इष्टफलसिद्धिजनकं परस्परसहकारित्वात्, अन्धपङ्गु-सम्यक्क्रियाज्ञानोभयवदिति । नन्वनेन ज्ञानक्रियाभ्यां द्वाभ्यां जन्ममरणभयविमुक्ति-लक्षणमोक्ष इति प्रतिपादितम् ।

" नाणं पयासगं सोहओ, तवो संजमो य गुत्तिकरो ।
तिण्हं पि समाओगे, मोक्खो जिणसासणे भणिओ ॥११६९॥ " इति ॥

विशेषावश्यकनिर्युक्त्या तु ज्ञानतपःसंयमेभ्यस्त्रिभ्यो मोक्ष इत्यभिहितमिति कथं न विरोध इति चेत्, अज्ञानविलसितमेतत्, तपःसंयमयोः क्रियारूपत्वेन तयोः क्रियाया-मेवान्तर्भावात् । तदुक्तम्—

" संजमतवोमई जं संवरनिज्जरफला मया किरिया ।
तो तिगसंजोगो वि हु, ताउ च्चिय नाण-किरियाओ ॥११७४॥ " इति ।

एतेन सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग इति तत्त्वार्थाधिगमाख्यसूत्रेणापि सह विरोधो निरस्तः, यतो ज्ञानग्रहणेनैवेह सम्यग्दर्शनमाक्षिप्यते, तदन्तरेण तस्याप्यभावात्, मिथ्या-दृष्टिज्ञानस्याज्ञानत्वेन पूर्वमेव प्रतिपादनात् । यद्वा मतिज्ञानस्यैव रुचिरूपो योऽपायांश-स्तद्रूपत्वेन सम्यग्दर्शनस्य ज्ञानात्मकतया सद्ग्रहनयाभिप्रायेण सम्यग्दर्शनज्ञानयोर्ज्ञानत्वेन रूपेणैकत्वविवक्षणादिति, गोबलीवर्दन्यायेन सम्यग्दर्शनज्ञानयोः पृथग् विवक्षया तु सम्यग्दर्शनादित्रितयस्यैव मोक्षानुकूलैकशक्तिमत्त्वावच्छिन्नकारणत्वलक्षणं मोक्षमार्गत्वं तत्त्वार्थाधिगमाख्यसूत्रेण विहितमिति सर्वमनवद्यम् । ननु सम्यग्दर्शनादित्रयस्य ज्ञान-क्रियोभयस्य वा मोक्षकारणत्वमस्तु तथापि तत्केन रूपेणेति चेत्, उच्यते, अन्वय-व्यतिरेकाभ्यां कार्यकारणभावग्रह इति ताभ्यां सम्यग्दर्शनत्वेन सम्यग्ज्ञानत्वेन सम्यक्-चारित्रत्वेन यद्वा ज्ञानत्वेन क्रियात्वेन प्रत्येकरूपेण मोक्षम्प्रति स्वेतरसकलकारणसहकृतस्य सम्यग्दर्शनादेः कारणत्वग्रहाच्चत्त्वत्रयापेक्षयैकैकस्यापि परस्परसापेक्षस्य कारणत्वम्, सामग्री

बोधात्, यतस्साक्षाद् दृश्यत एव प्रचुरविषलवसमूहोऽपि प्राज्ञकुशलक्रियपीयूषपाणिमहावैद्यकृतमिथोविशिष्टद्रव्यसंयोगविशेषापादितपरिणामान्तराऽऽपन्नो निर्विषीसन्नगदरूपतां लोहसमूहोऽपि स्पर्शमणिस्पर्शतस्सुवर्णभावमात्मसात्कुर्वाण इत्येतस्मिन् लोकसिद्धे किं विवादेन ? तद्वत् मिथ्यादर्शनसमूहोऽपि स्याद्वादतत्त्वज्ञयथास्थानविनियोजितपरस्परसापेक्षभावोऽत एव दूरीभूतविरोधभावत्वेनाऽविरोधभावङ्गतः समासादितस्याद्वादस्वरूपस्सम्यक्त्वमासादयतीति यथार्थभावेन सर्वनयविषयप्रतिपादकतया तन्मयं जिनवचनमपि सम्यग्रूपमेव, अत एव जिनवचनसमुद्रस्यैते प्रत्येकनयान्तरङ्गा वेदान्तसाङ्ख्यबौद्धादितत्तद्दर्शनप्रकृतिभूताः, तन्मयश्च जिनवचनसमुद्रो रत्नत्रयममलं प्रसूत इति तदर्थिनस्तत्कर्तारं भवन्तं नम्रीभूयाऽऽश्रयन्ते, अभिहितार्थसंवादि चेदं वादिगजकेशरिश्रीसिद्धसेनदिवाकरभगवद्वचनम्—

" नयास्तव स्यात्पदलाञ्छना इमे, रसोपविद्धा इव लोहधातवः।
भवन्त्यभिप्रेतफला यतस्ततो, भवन्तमार्याः प्रणता हितैषिणः॥१॥" इति।

'अमयसारस्स' इति–न विद्यते मृत मरणं यस्मिन् असौ अमृतो मोक्षः, तं सारयति–गमयति मोक्षस्वरूपप्रतिपादकत्वाद् बोधयति मोक्षकहेतुतया तं प्रापयतीति वा यत्तत् अमृतसारम्–तस्येत्यर्थः। 'अमयसायस्स' इति पाठे तु अमृतवत् स्वाद्यते यत्तदमृतस्वादम्–अमृततुल्यमिति यावत्, अमृतमास्वाद्यमानमनिर्वचनीयानन्दसन्दोहं जनयति तद्वदिदमपि जिनवचनमधीयमानं श्रूयमाणं वा शुक्लपाक्षिकसंविग्नभवित्रातानामनुपमप्रमोदभरमुत्पादयति, एवंविधस्य तस्येत्यर्थः। भगवओ–क्षीराश्रवाद्यनेकलब्ध्याद्यैश्वर्याद्यर्थसमन्वितत्वेन भगवतः, अनेन विशेषणेन तस्य ऐहिकसम्पद्विशेषजनकत्वमाह। संविग्गसुहाहिगम्मस्स' संविग्नसुखाधिगम्यस्य, संविग्नैः " यथेह लवणाम्भोभिः पूरितो लवणोदधिः। शारीरमानसैर्दुःखैरसङ्ख्येयैर्भवस्तथा ॥ १ ॥" इत्येव भवस्वरूपभावनया भवविमुखैः, कारागारविमुखैः कारागार इव संसारोऽनन्तदुःखमयस्थानत्वेन तैर्हेय एव, अव्याबाधाखण्डपरमानन्दैकनिकेतनत्वेन तद्विपरीतलक्षणो मोक्षश्चोपादेय एवेत्येवं परमार्थतत्त्वविचारणया मोक्षमभिलिप्सुभिः " काम ! जानामि ते मूलं, सङ्कल्पात् किल जायसे। अतस्त्वं न करिष्यामि, ततो मे किं करिष्यसि ? ॥ १ ॥" इति भावनया कारणात्मकसङ्कल्पोच्छित्त्या तत्कार्यभूतकामभोगासक्तिनिवृत्तैः, भवाभिनन्दिनां जिनवचनं कर्णशूलायमानमिति न तु तैः, इदमेव जिनवचन श्रोतृयथार्थावबोधजनकत्वेन तथ्यं भ्रमप्रमादविप्रलिप्साधनासक्तपुरुषप्रणीतत्वेनाऽविसंवाद्यऽसंदिग्धत्वादिगुणोपेतमित्यतः सुखेनाधिगम्यतेऽवबोध्यते यत्तत् संविग्नसुखाधिगम्यम्, एतद्विशेषणेनापि विशिष्टबुद्ध्यतिशयसवित्समन्वितयतिवृषनिषेव्यत्वमस्य प्रतिपादितम्। एवंविधगुणगणालङ्कृतस्य जिनवचनस्य

सामायिकादिबिन्दुसारपर्यन्तश्रुताम्भोधेः कल्याणमस्त्विति प्रकरणपरिसमाप्तौ अन्त्यमङ्गल-
सम्पादनार्थमसाधारणयथार्थगुणोत्कीर्तनादिमद्यं स्तुतिमाह सूरिर्भगवानिति भावः।

कल्याणकृद्धर्मसूरिगीत-गुणौघधीरोदयसूरसूरिम् ।
भव्या सदाऽऽनन्दनवाब्धिसूरिम्, विशुद्धविज्ञानविकाशसूरिम् ॥ १ ॥

भव्यारमपद्मोल्लसनार्कसूरिं, पिपासुतत्त्वाऽमृतपायिसूरिम् ।
सद्धर्मलावण्यधरास्यसूरिं, कस्तूरधा स्तौमि च नेमिसूरिम् ॥ २ ॥

दिङ्मात्रमेव समदर्शि तृतीयकाण्डे, द्रव्यानुयोगमितिमञ्जुलवागमाम्बेः ।
तन्मोक्तिमेतमपनाद् पिबतातुरस्य, सन्त्यज्य दुर्नयविषं सुनयामृतं भोः ॥ ३ ॥

पवित्रेऽर्हच्चैत्यैर्नूपुर इव महाराधनपुरे, चतुर्मासीं स्थित्वा सगुरुकृपया वैक्रमशुभे ।
धराभ्रयुग्मङ्के नवतिथिजिनकल्याणकदिने, तृतीये काण्डेऽर्थं सुविवृतिपूर्तिं विहितवान् ॥४॥

इत्थमिति विषमैदंयुगीनकालप्रभावकलिकमहीयमानापूर्वघोरसावद्यबहुलैदमपकाकाहाऽप-
पारमार्थिकशक्तीनां भव्याङ्गिव्रातानां प्रमाणनानाविधनयनिक्षेपसप्तभङ्ग्यादिसङ्घटितजिन-
वचनप्रतिपाद्यमेकान्ततत्त्वमवगमेव दुर्लभम्, श्रुत्वाऽप्यतिकुण्ठितप्रज्ञसार्थेभ्यो सर्वनयमय-
संस्कृतपीयूषतत्त्वावबोधो दुरवधम्यः कदाचित्कथञ्चिदुपजाततथाविधज्ञानावरणकर्मक्षयोप-
शमभावस्यापि तत्त्वावबोधे सुगमपेऽप्यल्पायनकाले परमत्राणं प्रत्यादरः कार्यसन्तुलनार्थं
यमपितुमशक्यः, तस्य तथाभावेन ममापि तु तत्परस्येऽपि महाग्रन्थार्थसंस्मरणं स्वतार्थप्रतिपाद-
कत्वादल्पकथेवेति मत्वा जिनागमिदितत्त्वजिज्ञासवो विस्तारग्रन्थभीरवोऽमी विनीतविनेया
सम्यक्सम्यग्बोधे पयोऽस्य यथाभ्यासरिनो विशेषभावेनोपलब्धाः कथं भावारूपग्रन्थेनाल्पीयसा कालेन
पूर्वोक्ततत्त्वमधीयेरन्निति मनुप्रबुद्ध्वा "दुसमनिसादिवायरकप्पतरुणो" इत्यादि प्रवचनस्तुतिव-
नाद् दुःषमाकालनिशादिवाकरकल्पस्येत्याद्युपपादनाम्ना तार्किकशिरोमणिश्रीसिद्धसेन
दिवाकरेण प्रणीतस्य निर्मलतरतुच्छतमतामरवादिप्रवादिद्विरदघटाकुण्ठधीनिर्मोचित
युक्तिभावरसकदम्बपीठमेदिवतोपमद्रव्यानुयोगप्रतिपादनापेक्षामेदप्रयोग्यापिरोधमाश्रयद्व
दशाङ्गनयगर्भतत्त्वप्रामाण्यमितायसाऽमेयमुक्तिजातसहितस्य सम्मतितर्कप्रकरणस्य
विशुद्धपदमीक्षमभावप्रभावितवीतरागप्रवचनशासन—तीर्थोद्धारैकधुरीण—श्रीतपोगच्छाम्भोधमो-
मणि—शासनसम्राट्—भट्टारकाचार्य—श्रीविजयनेमिसूरीश्वरचरणारविन्देन्दिन्दिरायमाण
—तत्पट्टाब्धिचन्द्र—समयसन्मार्गदशयसति—सिद्धान्तविशारदविरुद—तपोगच्छभट्टारकाचार्य—
विजयदर्शनसूरि—विरचिता सम्मतितर्कमहार्णवावतारिकाख्यसम्मतितर्कस्फुटीका
समाप्तिमगादिति ।

# ॥ अथ प्रशस्तिः ॥

ग्रन्थे सम्मतितर्कनामविदिते काण्डत्रयोल्लासिते,
मूले सूक्तिरगाधधीधनवता वादप्रथोल्लासिनी।
अभ्याभाऽभयदेवसूरिविदुषा विद्वन्मनोरञ्जिनी,
दृब्धा या प्रभवन्ति कुण्ठमतयस्तत्राऽवगाढुं न वै ॥ १ ॥

तेषां तत्र सुखावगाहनकृते नौकोपमेयं मया,
व्याख्याल्पा रचिता प्रमाणनयनिक्षेपैश्च भङ्गीभरैः।
तत्तत्तत्त्वविचारसारकलिताऽस्त्वानन्दकेल्यै सदा,
न्यायाचार्ययशस्समीकृतपथोल्लासा विदां दृष्टिगा ॥ २ ॥

नित्यो नागम इति मानपदवीं नाऽपौरुषेयस्ततो,
नेशो विश्वविधायकोऽस्ति प्रमितस्तत्कर्तृको नागमः।
आप्तः किन्तु जिनस्तदुक्तिरमलाऽनेकान्ततत्त्वान्वया,
स्याद्वादागमसंज्ञिता ननु भवेन्मानं न चान्यागमः ॥ ३ ॥

वादिव्रातसमर्थिता तु सकलैकान्तप्रथा युक्तितो,
वादेऽन्योऽन्यकदर्थिता न विमलां सिद्धिं प्रयाति स्फुटम्।
स्याद्वादोऽमलनीतिसप्तकलितो यत्सप्तभङ्गीमयो,
निक्षेपानुगतो न वादिनिकरैर्दूष्यो भवेत्तत्त्वतः ॥ ४ ॥

नीतिन्यासिसमासतोऽत्र सकला संलक्षिता लक्षणं,
प्रत्येकं तु विभावितं बुधवरैर्यद्यथा दर्शितम्।
सूरीणां वचनं तदिष्टगतये संवादनायादृतम्,
यत्तन्त्रं च यदुद्भवं तदपि तद्युक्त्या समुल्लासितम् ॥ ५ ॥

भङ्गास्सप्तनयप्रचारसुभगाः सन्दर्शिता भेदतो,
यो भङ्गश्च यतो नयादुदयते प्रत्येकमावेदितम्।
यो धर्मो यदपेक्षयाऽत्र घटते तस्यापि निस्संशयं,
युक्तिव्रातसमर्थनं सुविहितं यस्माद्विरोधो हतः ॥ ६ ॥

मुख्यैकैकसदादिधर्मविषया आद्या निरंशास्त्रयः,
भङ्गा द्वित्रिकधर्मबोधनपरास्सांशास्तदन्ये च ते।
तेषामत्र विचारणा मितिनयाऽऽस्थां सप्तभङ्ग्याश्रितां,
कर्तुं पल्लविता यथाऽत्र सुगमा स्यात्सप्तभङ्गीगतिः ॥ ७ ॥

निक्षेपेषु सुघटितेषु सकलरूपादिरूपमेकैकशो,
नामादेरुपपादितं मतमिदाप्याभिरूह्यता सागमा ।
नीतानामिह योजना नियमिता संवादिता कल्पना-
स्त्यागो वचनैः सुयुक्तिकलितैः पद्मप्रभामाधुरैः ॥ ८ ॥
द्रव्यार्थस्य नयस्य यत्र विषयः सामान्यमामासिल-
व्यापी द्रव्यपदार्थ एक उदितो नित्योऽनुगामिरवमात्र ।
यः पर्यायनये विशेष इतराऽसम्भिमरूपस्तयो-
रेकान्ताऽनुमतिं निपूय विमतो सापेक्षता स्थापिता ॥ ९ ॥
धौर्म्यं द्रव्यनयाभितं जनिलयौ पर्यायनीत्याश्रितौ,
धर्मित्वं त्रितयं प्रतिक्षणमयत सर्वं समस्तेष्वपि ।
प्रोक्तं सन्मतिसूपा यथा प्रमितितो निश्चैस्तया साधितम्,
यथैकाम्लिमतं करामलगतं सर्वं इतं तत्स्फुटम् ॥ १० ॥
सत्कार्यादिमताऽपि कापिलमुखैराघेदिता सङ्गता,
अन्योन्यप्रतिपक्षभावकलिता साऽन्योऽन्ययुक्त्याऽऽहता ।
स्याद्वादिप्रविभाविता तु सकलसत्कार्यसंपया मानतो,
निर्णीता परवादियुक्तिनिकरैर्नैवायनेया क्वा ॥ ११ ॥
एकान्तस्य पतमप्रवर्तितमते क्वापि नो युज्यते,
हिंसादिर्नियतप्रवेकनियतो भेदप्रभेदाश्रितः ।
स्याद्धिंसादिकमार्हते तु सकलं सद्भावग युक्तितो-
ऽनकान्त परकीययुक्तिनिवहाऽनासीदतुपम्भितम् ॥ १२ ॥
संसारो न च युज्यते परमते तत्कारणाऽन्योन्यतो,
नो मुक्तिः परवादिकल्पनमता तद्धेत्वयोगाच्चतः ।
स्याद्वादोक्तिसमर्पितौ सम्रनकौ स्तो बन्धमोक्षौ तथा-
नित्यादि स्फुटमार्हते तु सकलं युक्त्या व्यवस्थापितम् ॥ १३ ॥
ज्ञानं नैकमपि स्वभावकलतः सर्वावभास्येव यत्,
तस्मिन्विनियपायमास्ति नियताऽऽवृत्त्यैव कर्मोत्थया ।
ज्ञानं पञ्चविधं ततस्त्वभिमतं नैव स्वतस्त्वत्र्व-
सत्यज्ञोपरहेतुयुक्तिनियमः संस्थापितो युक्तिभिः ॥ १४ ॥
सर्वज्ञस्य प्रसिद्धिरेव-कथिता तत्त्वस्वप्नप्रक्रिया,
मिमांसादुपयैक्रिया मधिक्रता संक्षेपतो मानतः ।

चर्चा चात्र प्रसङ्गतो बहुविधा सन्दर्शिता सागमाऽ-
नेकान्तप्रविचारणा परमतोत्खातेन पुष्टिकृता ॥ १५ ॥

स्याद्वादे सकलार्थगे स्वयमपि स्याद्वादयुक्ते ततोऽ-
नेकान्तस्त्वनवस्थया न हि यथा दूष्यो भवेद्वादिभिः ।
तत्सद्युक्तिप्रदर्शनं ननु तथा नव्योक्तिकान्तं कृतं,
श्रीमद्वाचकपुङ्गवोक्तिविमलाऽऽलोकोऽत्र सन्दर्शितः ॥ १६ ॥

यत्कर्माष्टकमार्हते तनुतयाऽनाद्यात्मसंयोगि तद्,
मान्यं पौद्गलिकं भवभ्रमणकृत् संछादनादावृतिः ।
तत्संपूर्णलये निरावृतिरसौ जीवोऽमलज्ञानवान्,
मुक्तस्सिद्धिशिलातले विजयते स्वानन्दपूर्णो विभुः ॥ १७ ॥

मुक्तेर्मार्ग उदीरितो जिनवरै रत्नत्रयं त्वात्मनो,
ज्ञानं दर्शनमस्खलद्गति तथा चारित्रमेतत्त्रिकम् ।
एकैकं न च तत्समर्थमभितो मुक्तौ न चैवावृतम्,
सम्यक् तत्त्रितयं सुनिर्वृतिकृते वाञ्छन्ति तद्योगिनः ॥ १८ ॥

तत्राशेषविशेषगोचरचर ज्ञानं मतं केवल,
सामान्यं त्वखिलं प्रकाशयति यत् तत्केवलं दर्शनम् ।
एकस्मिन्समये तयोस्तु भवनं श्रीमल्लवादी जगौ,
भिन्ने श्रीजिनभद्र आप्तप्रवरस्सैद्धान्तिकस्तत्क्षणे ॥ १९ ॥

नव्योक्तिप्रवितानतैकनिपुणः श्रीसिद्धसेनो जगौ,
भेदो नैव तयोस्त्वतो न च तदाऽऽवृत्योर्भिदा कर्मणोः ।
स्यात्सामान्यविशेषगोचरकृता भेदप्रथौपाधिकी,
तस्मात्केवलमेकमेव मितितो ज्ञानञ्च तद्दर्शनम् ॥ २० ॥

इत्येवं मिथ एव युक्तिबलतो राद्धान्तकान्त त्रिकं,
तत्त्वनीत्यवलम्बनेन प्रथितं नेद विरोधास्पदम् ।
नाज्ञानादुपढौकित न च निजोत्प्रेक्षैकसार यथा,
श्रीमद्वाचकपुङ्गवेन यशसा तद्भावितं तत्तथा ॥ २१ ॥

एकं भिन्नमथाप्यपर्यवसित सादीति यत्केवलं,
तत्सापेक्षमुदीरितं तु सकलं नो वै विरोधस्ततः ।
स्यात्सामान्यविशेषरूपमननं जीवे चिदेकात्मके,
माला चात्र निदर्शनं सुगमितं भिन्नैकनामोद्भवे ॥ २२ ॥

न्यायालोकविराजमानकृतयोऽर्हत्स्थापनापूजनाऽऽ-
च्चान्तस्वान्तसुभक्तिजातप्रतिमामार्तण्डसत्कीर्तयः ।
स्पृश्यास्पृश्यविवेकबोधफलकग्रन्थक्रियाकर्मठा,
वृत्त्या सम्मतितर्कवृत्तिगतया विद्वज्जनामोददाः ॥ ३० ॥

तीर्थोद्धारपरायणाः प्रतिदिनं व्याख्यानतो धर्मगान्,
श्रीसिद्धाचलदर्शनादिकृतये श्रीसङ्घयात्रोन्मुखान् ।
सत्क्षेत्रेषु विविच्य भव्यमनसः सद्द्रव्यदानोद्यतान्,
भव्यान् जैनमतप्रचारचतुरान् कुर्वन्त इष्टार्थिनः ॥ ३१ ॥

श्राद्धः कोऽपि जिनार्चनादिविधुरो माभूत्क्वचिद्भावुको,
धर्माराधनकृत्कदाऽपि समये चेत्याशयालिङ्गिताः ।
श्रीसेरीसकदम्बतीर्थमहुवातालध्वजादौ जिन-
चैत्यानि प्रतिमाश्च कारयितुमत्युत्काः प्रतिष्ठां जनैः ॥ ३२ ॥

सूरीणा प्रवराः श्रुतोक्तविधिना सम्यक्क्रियाऽऽराधकाः,
सम्यग्ज्ञानविराजिता हतरिपुव्राताश्च सद्दर्शनाः ।
मन्त्राराधनतत्पराः सुरगुरुप्रज्ञाभिमानापहा,
अस्माकं गुरवो जयन्ति भुवने श्रीनेमिसूरीश्वराः ॥ ३३ ॥

*यस्या नाऽऽस्यतुलाकथाऽपि शशिनाऽथाविष्कृतोपेक्ष्यते ?
स्यात्पादेऽप्यवरोपिता कमलशी-ताश्वादिता नो वरा ।
माता सुन्दरतादिकस्य न धनी बुद्ध्यादिभिस्सम्मतः,
सा वीरप्रतिमाऽवरा मधुपुरी-संस्थाऽस्तु भूत्यै सदा ॥ ३४ ॥

---

* यस्या वीरप्रतिमायाः शशिना चन्द्रेण सम, आस्यतुलाकथाऽपि मुखसादृश्यवर्णनाऽपि, नोपेक्ष्यते, काक्वा उपेक्ष्यते एव, यस्या पादेऽपि चरणेऽपि, अवरोपिता कल्पिता कमलशीर्वा श्वादिता कमलचन्द्रत्वादिका, नो नैव, वरा श्रेष्ठा स्यात्, सा कल्पनाऽपि वास्तविकसादृश्याऽभावादयुक्तैव । यस्या· प्रतिमायाः सुन्दरतादिकस्य सौन्दर्यादिगुणस्य माता एतादृशमस्यास्सौन्दर्यादिकमित्येव नियमनकर्ता, अपरिमितसौन्दर्यादिगुणस्य परिमितसौन्दर्यादिवर्णनमबोधविलसितमित्येतस्मात्कारणाद् बुद्ध्यादिभि बुद्ध्याद्यात्मकधनेन धनी धनवान् न सम्मतः, परीक्षकाणामिति शेष , चतुर्थचरणार्थस्तु व्यक्त एव, अत्र शशिनाथाऽऽख्याध्यापकनाम, पिता कमलशी, माता धनी, स्वनामसुन्दर इति ख्यापित भवति । इत्येवं चतुस्त्रिंशत्तमपद्यार्थो ज्ञेय. ।

उद्भूतया गुरुभक्तिसम्भाविततया वृत्तिर्मयोद्भासिता,
येयं सम्मतितर्कतत्त्वमननैकान्तप्रकाशात्मिका ।
साऽनेकान्तमतावगाहचतुरां बुद्धिं विधायोज्ज्वलां,
संसारे च शिवे समानमनसां मुक्तिं विधत्तात्सताम् ॥ १५ ॥

श्रीमद्दर्शनसूरिणा जिनमते भक्तां स्वकीयां दृढां,
व्यक्तुं वृत्तिरियं जिनागमगतानेकान्ततत्त्वार्थिना ।
दुष्प्राप्यो न परोपकारजननं चेन्मास्तु भक्तिर्दृढा,
स्वस्यैवास्तु निरन्तराभ्युदयतो जैनागमे कामिता ॥ १६ ॥

वर्षे बाणखखाक्षिभिः ( २० ५ ) परिमिते संवत्सरे वैक्रमे ।
मार्गेऽर्के पक्षे च पालनपुरे विद्याधिपे सत्तिथौ ।
सम्यक् सम्मतितर्कशास्त्रविवृतिश्शास्त्रीयतत्त्वानुगा,
पूर्ति दर्शनसूरिणा वरगुरोर्नीता कृपातश्शिवा ॥ १७ ॥

दोषः सूक्तिभिरस्ति कुत्सितधियामज्ञास्तु नैवार्थिनः,
प्राज्ञ मन्यजना मनागपि न तत्स्पर्शं क्षमन्ते ततः ।
स्यादेतेन परोपकार इति मे चित्तेऽपि नोज्जृम्भते,
स्वात्मस्योपकृते कृतव्यसनिताऽभ्यासान् स्यपुष्ट ध्रुवम् ॥ १८ ॥

अनुपयोगतो जाता, स्खलना क्वचिदत्र ताम् ।
गुणैकदृष्टयस्सन्तः क्षमन्तामिति प्रार्थये ॥ १९ ॥

विश्वातिशायिश्रीवीरप्रभुशासनसमुन्नतिसमुन्नतमतिप्रकर्षाखण्डगौर
प्रभावशालि-सूरिसार्वभौम-शासनसम्राट्-सुगृहीतनामधेय-
श्रीतपोगच्छभट्टारकाचार्य-श्रीविजयनेमिसूरीश्वर-पट्टाल
ङ्काराऽऽयमान्यायवाचस्पतिशास्त्रविशारदबिरुद-तपोगच्छा
चार्य-श्रीविजयदर्शनसूरिप्रणीत-सम्मतितर्कमहार्ण
वावतारिकाख्यलघुटीकासमीचीन

## ॥ श्रीसम्मतितर्कप्रकरण समाप्तम् ॥

## ॥ सम्मतितर्कमहार्णवावतारिकाख्यटीकायाः शुद्धिपत्रकम् ॥

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १४ | तमसा | तमसाम् |
| १२ | २७ | इत्यादि म | इत्यादिम |
| १४ | २५ | समुग्धा | संमुग्धा |
| १५ | ११ | यितु | यितुं |
| २० | २० | सिद्ध | सिद्धं |
| २३ | ४ | प्रामाण्यप्रा | प्रामाण्याऽप्रा |
| २५ | १२ | भास्वर | चाकचक्य |
| २५ | १७ | ज्ञानमपि | ज्ञानद्वयमपि |
| २७ | १९ | दोषबलाद्वा | दोषबलाद्वा |
| ३३ | ९ | मुष्टाद्य | मुष्ट्याद्य |
| ३४ | ३० | दिनकरनिकर | दिनकरकरनिकर |
| ४० | १५ | इत्यादि सिद्धा | इत्यादिसिद्धा |
| ४० | २८ | त्मनः | त्ममनः |
| ४१ | २३ | परशौ | परेशो |
| ५५ | १९ | पत्या | पत्त्या |
| ६० | २० | द्वाराति | द्वारविषयाति |
| ६१ | १० | व्यवह्रियते | अवह्रियते |
| ६३ | ८ | गुणिभूता | गुणीभूता |
| ६४ | ४ | योगः काल | योगकाल |
| ६४ | १८ | नय शाखा | नयः शाखा |
| ६५ | ४ | सूत्र | सूत्र— |
| ६५ | ९ | दृष्टव्य | द्रष्टव्यः |
| ६५ | १० | विशेष्यस्य | विशेषस्य |
| ६६ | २४ | र्थाम्भु | र्थमम्भु |
| ६८ | १२ | मेतत्, तस्य | मेतत् तस्य |
| ६९ | २६ | ष्योऽर्थः तदे | ष्योऽर्थः, तदे |
| ७० | ६ | बोधानुपपत्ति | बोधानुत्पत्ति |
| ७२ | २९ | वस्त्वगाहि | वस्त्ववगाहि |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७५ | ११ | रिति स्वाद | रिति, स्वाद |
| ७६ | १३ | इति ताम | इति नाम |
| ७६ | २० | तत्तद्मेया- | तत्तद्पेक्षा- |
| ८० | २७ | इति, ताम | इतिनाम |
| ८१ | १६ | चोत्तरापे | चोत्तरोत्तरापे |
| ८८ | १० | पर्यायामापि | पर्याया अपि, |
| ९२ | ७ | दि च | दिच |
| ९३ | २ | तृपा | रूपा |
| ९३ | १२ | निरस्ता | निरस्ता, |
| ९४ | २१ | द्रम्यमि | द्रम्यत्वमि |
| ९६ | ११ | बचनेन मेदा, | बचने न मेदा, |
| ९६ | २६ | स्तिकनयास्तिकनयाम्भु | स्तिकनयाम्भु॰ |
| १०३ | २४ | गुणा स | गुणाः स |
| १ ६ | ४ | विज्ञाता | विज्ञाय |
| १०६ | ४ | पाये त | पार्ये त |
| १ ७ | १३ | मिति " कर्म | मितिकर्म |
| १०७ | १५ | बहुयः | बहुपया |
| १०९ | २७ | यस्ते | यस्ते |
| ११२ | ७ | तद्ऽभावे | तदभावे |
| ११३ | १४ | ज्ञानमा | ज्ञानाम |
| ११३ | १४ | पयस | पयास |
| ११३ | १५ | तस्था | तदमा |
| ११३ | १५ | बाक्यप्रा | बाक्याप्रा |
| ११४ | ५ | मन्य | मन्योन्य |
| ११८ | १४ | प्रथि- | प्रति- |
| १२० | २९ | कारणे, द | कारणे द |
| १२१ | १४ | कम्प्यप्रार्थ बयाबारकं | कोऽप्यप्राप्ती बयाबारका |
| १२४ | १९ | रेव मूल- | रेव हि मूल- |
| १२५ | २२ | त्वात् म | त्वात्, म |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२८ | ६ | नाप्युकारेण | नाप्युपकारेण |
| १२८ | ७ | दिति तदेव | दिति । तदेव |
| १२८ | ८ | नुलब्धि | नुपलब्धि |
| १२८ | १८ | भेदाऽ | भेदाऽ- |
| १२८ | २१ | दान | दान- |
| १२८ | २६ | उत्पादान | उपादान |
| १३० | २ | नुलब्धि | नुपलब्धि |
| १३० | ८ | कोऽपि हि कु | कोऽपि कु |
| १३३ | १३ | यिकेर्वं | यिकर्वं |
| १३३ | २१ | वौद्धा धियं | बौद्धो धियं |
| १३३ | २८ | श्चित्सद्रव | श्चित्सद्रूप |
| १३४ | २३ | कारत्वात् | कारकत्वात् |
| १३९ | ३ | दृष्टव्य | द्रष्टव्य |
| १३९ | ४ | पुद्रगलेः | पुद्गलैः |
| १३९ | १५ | इत्यस्या | इति, अस्या |
| १४१ | ३ | तुल्लता | तुल्यता |
| १४२ | ३ | श्चिदद्भेदा | श्चिद्भेदा |
| १४३ | २८ | दस्तित्व | दस्तित्व- |
| १४४ | २९ | दृष्टव्य | द्रष्टव्यः |
| १४७ | १ | पृथक् ल | पृथग्लक्षणल |
| १४७ | १९ | भवेद्विरोधः | भवद्विरोधः |
| १४७ | ३० | भूरः | भूतः |
| १४९ | २२ | पसार्य | प्रसार्य |
| १५० | २२ | पञ्चत्ना | पञ्चचत्ना |
| १५१ | ६ | द्विक्त्स | द्विवत्स |
| १५२ | ९ | रसत्व | रसत्वं |
| १५२ | २० | दकव्य | दकत्वव्य |
| १५४ | ८ | ता वि | तावि |
| १५४ | ८ | तनि | तविधिनि |

